# चतुर्थ - दृश्यम् ।

[ स्थानम्— श्रीरामकृष्णस्य प्रकोष्ठः ।
समयः—रात्रिः ।
श्रीश्रीपरमहंसदेव—नरेन्द्रनाथ - कथोपकथनम् ]

( श्रीरामकृष्णो गायति )

मम माता त्वं हि तारा त्वं त्रिगुणधरा परात्परा ।
जानामि माता रे दीनदयामयि, दुर्गमे त्वमसि दुःखहरा ॥ ५७
सर्वत्रासि जले स्थले
त्वमाद्यमूले रे मातः ।
असि सर्वघटेऽस्थिपुटे—
साकाराऽथवा निराकारा ॥ ५८
त्वं हि सन्ध्या त्वं गायत्री, त्वं जगद्धात्री रे मातः ।
अकूले च त्राणकर्त्री, सदाशिव - मनोहरा ॥ ५९

श्रीनरेन्द्रः । ( स्वगतम् ) महाकालाहलमयोऽप्येषोऽयं भावसमुद्रः । तिमिंगिलगिलानां यथाऽयमाश्रयस्तथा रत्नानामपि । ततो नाहं सागराद् बिभेमि । शौर्यं वीर्यं सर्वदाऽऽध्येयम् । तद्विषयेऽहं व्रती च ।

( श्रीरामकृष्णमुद्दिश्य )

किन्तु कथं मां मनाक्त्याऽकर्षति, यदहं स्वकृत्यानि परित्यज्य सर्वदाऽत्रागन्तुम् उत्कण्ठितो भवयम् । यस्य स्वाऽहं उपवासक्लेशैः रोदिति जननी तथा च भ्रातरः, कथं वा तस्य स्वमुक्ति-विलासः ?

दैन्यसागरमग्नस्य सचिन्तस्य निरन्तरम् ।
तत्राश्रुभिः कुटुम्बानां निर्वाणं मे कथं भवेत् ॥ ६०

श्रीरामकृष्णः। चेतोभरण नरेन्द्र ! बाहुबल न सर्वातिशायि। माता नेच्छति चेन्मानवबाहुर्नोत्तोलितो भवति कदापि। जनन्या अभिलाषं विना नाग्निर्दहति, पवनो न वाति, सूर्याचन्द्रमसौ न भातः। सर्वमेतत् जगज्जनन्या इच्छाक्रमेण भवति। तत् सत्य त्व वाञ्छसि चेत् स्वपरिवार-भरणपोषणे, मातृमकाशे तन्निवेदय। कृपामयी साऽवश्यमेव त्वयि कृपां विधास्यति, तव परिवारजनोऽन्नकष्टमुक्तो नितरां भविष्यति।

नरेन्द्रनाथः। ममाधिकार. श्रीगुरुसकाशे निवेदने। तस्मात् प्रार्थये भवानेव मदर्थं निवेदन कुर्यादिति। (श्रीगुरोः पादपद्मे समाश्रित्य)

त्वादृग् गुरुर्विपुलपुण्यफलेन लभ्यः<br>
सम्पन्नमातिमहती तव पादसेवा।<br>
याचे ध्वा पदाब्जयुगले तदिय त्वदीये<br>
यद् वाञ्छित मम विधातुमहो व्रती स्याः॥ ६१

देव !

दारिद्र्यादि-समुद्भवेन भगवत्तापेन सतापितो<br>
वाञ्छस्तत्प्रतिकार-पद्धतिमिहायातोऽस्मि ते सन्निधौ।<br>
तस्मात्त्वा शरण गतस्य नितरा खिन्नस्य ससारतो<br>
वेद्य वेदय मार्गमर्गलयिनिर्मुक्त हि मुक्तेर्मम॥ ६२

श्रीरामकृष्णः। नरेन्द्र ! भूयोऽपि कथयामि—जननी मम जगन्नियन्त्रणकर्त्री। तस्याः सकाशे प्रार्थनायां कथं तव वैमत्यम्?

सा चेत् प्रसीदति मनाङ् न जनो विषीदेद्<br>
दीनोऽथ दीर्णहृदयः परितापनो वा।<br>
आजीवन कठिनया कलितो रुजा या<br>
तस्य त्रितापहरणीं शरण कुरुष्व॥ ६३

(ततो बहिर्गच्छति नरेन्द्रः)

श्रीरामकृष्ण. । जननि भवतारिणि ! शिवतुल्योऽय जगतां चिरशिशो बालक आचरतु ममाभिलषितम्। एष एव मम चिरेप्सितो जनो यो मम धर्मं दर्शनञ्च जगति सञ्चारयिष्यति।

विष्णोर्यथा गरुड़ एषोऽपि मम वाहनो भूत्वा मद्धर्मविज्ञापितं करोतु जगत् । मम सर्वा शक्तिरस्मै एव प्रदेया ।

(विचिन्त्य) अहो बुध्ये नैष वटुरस्मिन् कर्मणि जातः समर्थः ।

(पुनः प्रविशति नरेन्द्रनाथः)

नरेन्द्रः । देव ! देवीसकाशे कथमप्यहं तद्विषयकं किञ्चिद् वक्तुं न शक्तोऽस्मि । तस्या दर्शनमात्रमेव मम चित्तं विषयान्तरनिविष्टं भवति । बहिर्भूतं किञ्चिदपि नाहं स्मरामि । तत्र भवन्त एव प्रमाणम् ॥ जनन्यै केवलमहमुक्तवान्— "जननि ! विवेक वैराग्यं ज्ञानं भक्तिं च मह्यं देहि । यथा त्वत्कृपया त्वां द्रष्टुं समर्थो भवेयम् "।

देवदेव ! वारत्रयं भवदादेशेनाहं गतवान् । जनन्या भुवनमोहन-रूपेण श्रीमन्दिरं समुद्भासितं ; वराभयकरौ विस्तार्य सुमनोहरं हसति मृन्मयाधारभूता चिन्मयी मम जननी । तुच्छं संसारवृत्तान्तं नाहं कदाचन तस्यै वक्तुं पारयामि पारयिष्यामि वा । नाहं कदाचन मातृसमीपे आत्मानं प्रभावयितुं शक्ष्यामि । कदापि न ।

श्रीरामकृष्णः । (सस्मितम्) यतस्त्वं मातृसकाशे संसारसुखार्थं नावेदितवान्, तवादृष्टे संसारसुखं नास्ते लिखितमिति निश्चितम् एव । तथापि मत्प्रार्थनया जननी तथा विधास्यति, यथा कदाचन तव परिवार-जनस्यान्नकष्टं न स्थूलतो भवेत् ।

नरेन्द्रः । देव ! बाढम् । तदेव यथेष्टम् । धर्माचरणविषये दृढमभिनिविष्टोऽतः परमहं भविष्यामि । (स्तुतिमुखेन)

मनश्चिन्तयात्म — विकासनम् ।
तमस आगमन तमसि पुनर्लोपन
मध्यपथे नूनं दुःख-घूर्णनम् ॥ ६४
वहति समीरणः कूजति खगगणः
विकाशते पुष्पदल विमलम् ॥

अमलकमलदल-क्षणिकशोभनजल
यथा तथैतज्जगति सकलम् ॥ ६५
भागवतकृपावल-ब्रह्मभावामलामल—
महाबलो गुरुर्मया प्राप्तो यदि रे।
तस्य पादपद्मतले विश्वशश्वत्पुण्यफले
राजे क्षुद्ररेणुसमोऽहं नरेन्द्रो रे॥ ६६

श्रीरामकृष्ण । सर्वमेतन्मम गम्भीरानन्दाय । ब्रह्ममयो भूत्वा हे शिव ! जगतोऽशेषकल्याणसाधनं त्वं कुरु ।

पुनः शृणु नरेन्द्र । वैष्णवा उपदिशन्ति "नाम्नि रुचि, जीवे दया, वैष्णवपूजनञ्च" इति । "अभेदो नामनामिनो" रिति सानुरागं नाम जपनीयमेव । किन्तु जीवे दयेत्येतत् किम् ? (समाधिभावमापन्न)।

(धीरं निःश्वस्य) जीवे दयेत्येतन्मह्यं न रोचते । कीटाणुकीटजीवः कथमन्यस्मिन् दयेत ? कस्त्वं नाम दयाप्रदर्शनाय ? नहि, नहि, नरेन्द्र ! जीवे दयेति न, शिवज्ञानेन जीवाः सेवनीया इत्येव युक्तम्।

नरेन्द्रः । अहो महामहिमा श्रीगुरुदेवस्य वचसः । नवनवतमालोको मयाऽद्य लब्धः । अत एतद्यथाति विश्ववासिनः कीटपतङ्गादयः सेवनीयाः पूजनीया इति ।

*अनेनोपायेन काननस्थ वेदान्तशास्त्रं गृहे आगमिष्यति, जीवने महत्त्वपूर्ण वेदान्तोपदेशाः परिपालयिष्यन्ते।*

धन्योऽहं चिरकल्याणी गुरोश्च स्नेहसम्बलः ।
वेदान्तलोक-माहात्म्य-परिज्ञान-सुमङ्गलः ॥ ६७

(ध्यायन्) अहो जननि भवतारिणि ! अहो स्नेहमय कल्याणमय परमगुरो ! गल्प नु धन्योऽस्मि—

(पुनरपि ध्यायन् गायति)

मां शृणु वत्स्यातुर (प्रतामयि)
पुन मंदिरे मातज्ञान-विचारे ।

तव हि प्रेममदिरा-पानेनास्मि मदातुरो
रे मातः ! भक्तचित्तहरे मज्जय प्रेमसागरे ॥ ६८
तवोन्मादकारागारे हसति कोऽपि क्रन्दति रे—
नृत्यति कोऽपि थाऽनन्दभरे ।
ईशामुसाश्रीचैतन्या (रेऽम्ब !) प्रेमभरेऽचैतन्या
अहो कदाऽम्ब ! भवेय धन्यो मिलित्वा तदभ्यन्तरे ॥ ६९
स्वर्गे नृन्मत्तमेला समगुरुशिष्यचेला
प्रेमखेला बोधस्यापारा रे ।
त्व प्रेमोन्मादिनी मातोन्मादशिरोमणिः
प्रेमधनिन कुरु मातर्मा दीनप्रेमदास रे ॥ ७०

समाप्त चतुर्थ-दृश्यम ॥

—०—

## पञ्चम - दृश्यम् ।

[ (मिश्र) विष्कम्भक ]

श्रीनरेन्द्रस्य विवाहार्थं घटकापचार ।

तत्र माल्यकार , नापित , घटकश्च ॥

स्थान— दक्षिणेश्वरे मन्दिरस्य पार्श्वदेश ।

समय — पूर्वाह्णे ऽष्टघटिका ।

नापित । माल्यकार । यथैव सूर्यदेवस्तत् तत्तत् तत्गत्या ऊर्ध्वं गच्छति हसति लसति तपति च, तद्वदस्मानन्दोऽपि ऊर्ध्वगामी राजते । पादनखादारभ्य नाभितलतो मस्तकमारोहति ।

माल्यकार । भ्रातर्नरपुङ्गव । तत् कथम् ? अपि प्रयत्न कथन सफलीभूत ?

क्षुर करे शाणितमाददानो
गृहान्तर त्व गृहतोऽभ्युपैषि ।
वितत्य सत्यानृतजालबन्ध
जगन्ति विश्रामयसि प्रमोहात् ॥ ७१

अपि च—

विधाय कर्णोपरि क्षुरखुरारव
विवादमुत्पादयसीह सन्ततम् ।
एव स्वमर्थं बहुधा वितन्वतो
नितान्तशुद्ध किल जातिकर्म त ॥ ७२

अथवा घटकनिपुनस्त्व नवमघटन घटयसे ।

नापितः । अये माल्यकार ! शोभनकर्मकरस्त्वं मा निन्दसि ? पुनर्नरसुन्दर मा नर-पुङ्गव च कथयसि ?

घटकः । (स्वगतम्) अहो ! नापितस्य भणितं नरपुङ्गव-शब्द-मार्गेण चट्चटायते । यतः क्षुरं हस्ते वर्तते, जगदेव क्षुरतलगतमिव मन्यते । पुनर्मालाकारकर्म निन्दितुमुद्यत आस्ते । भवतु, उभौ मम सहायकौ । नाहमेतयोर्विवादे किमपि वच्मि ।

नापितः ।

कण्टकैः कण्टकं हत्वा शोभसे माल्यकर्मणि ।
गृहाद् गृहान्तरं गत्वा करोषि रूपमर्पणम् ॥ ७३
घटकाय निवेद्याहो रूपमम्भारभारतीम् ।
कष्टं यापयसे नक्तं दिवसे माल्यसुन्दरः ॥ ७४

घटकः । अये कण्टकोद्धार ! अये नरकर्णजप ! नैष समयोऽस्माक-मात्मकलहवृद्धये । साम्प्रतमक्षुस्थ-विश्वनाथदत्त महोदयस्य ज्येष्ठपुत्रेण सह दशसहस्रमुद्राविनिमयेन मन्माध्यस्थ्येन श्रेष्ठि-महोदयस्य कनकचम्पकदाम गौर्याः कन्यकाया विवाहवार्ता प्रसरति । अप्येष समरन्ते कलहाय ? श्रूयते किल—

"कन्या कामयते रूपं माता वित्तं पिता गुणम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥"

तन्ततो मिष्टान्नमवश्यं प्राप्य सर्वेषां युवयोस्त्वाधिक्येनान्यत् सर्वम् ॥

नापितः । किन्तु जामाता स्वयं किं वाञ्छति ? यथाऽस्मिन् व्यापारे स्वयं नरेन्द्रनाथोऽस्माकं युवकोत्तमो जामातृधुरन्धरः ?

माल्यकारः । घटकमहोदय ! तत्रैव महती विप्रतिपत्तिः । अन्यथा कथं वयं परस्परं निन्दमानौ भवावः । एष द्विखण्डितमस्तकनीमः पटोल-सदृशचक्षुर्महासाधुर्विवाहभयधुम्नूरपीती राजते । मीलितत्रिस्टिशाविवाऽस्मै "नाहं कदापि विवाहे प्रवर्तिष्ये" इति च कथयति ।

घटक. । अहो तेन किम् ? कति कति भगवदवतारा महापुरुषा अस्माभिः कृता विवाहपाशबद्धा, कः पुनरेष महावतारोऽस्माभिर्यो्द्धुमुपागतः ?

> त्रातारौ भुवनस्य यावभवतां कालक्रमाद् भूतले
> देवौ बुद्धमहाप्रभू, न किल तावापादितौ बन्धनम् ?
> कोऽयं भालतटे दिशा समुदित. श्रीमान् नरश्चन्द्रमा
> यस्तिष्ठेत् सुचिरं विवाहविमुखो मय्याश्रिते वादिताम् ॥ ७५

एवं सर्वे कुर्वन्ति। किन्तु वारमात्रकथनेनैव मत्स्या यथा आमिषं तथा एते भाविजामातृपुङ्गवा नारीलोभनं गिलन्ति कटिदेशपर्यन्तम्— तत् कुतोऽयं विश्वनाथपुत्रो विलेश्वरः स्वनामधन्य-महापुरुष. ?

नापितः । किन्तु भ्रातः घटकवर । एष अक्षोटकोष इव सुतरां दृढतर इति ध्रुवं जानीहि। अन्यथा कथं स्वयं विश्वनाथदत्तस्य पत्नी चिरहताशा राजते । कुटुम्बाश्च सर्वे कथयन्ति श्रीदक्षिणेश्वर-रामकृष्ण-ठक्कुर महोदयससर्गादेष जातः प्रस्तरः, माता च चक्षुर्जलसागरमेव मुहुः प्रेक्षते इति। काले सर्वं संभवतीति जानीहि ।

घटकः । घटना कठिना जाता ममोपेक्षणकारणात् ।
बुद्धिकोटिप्रकाशेन साधये कार्यसंततिम् ॥ ७६

नापितमाल्यकारौ ॥

> घटके घटनावृत्ति र्जायते सुतरां भुवि ।
> पृथ्वीतलं तथा चास्ते घटकानां कराद्वहि. ॥ ७७

आयातीव स रामकृष्णदेव सशिष्य. । तत्पलायामहे वयम् ।

( सर्वे निष्क्रान्ता. )

( समाप्तो विष्कम्भः ) ॥

—॥ दृश्यान्तरम् ॥—

[ खीष्टाब्द—१८८५ मार्चमासस्य एकादशदिवस ।
स्थानम्—दक्षिणेश्वर काली-मन्दिरस्थ श्रीरामकृष्णकक्ष ।
श्रीरामकृष्ण—नरेन्द्र—गिरीश—राम—हरिपद—बलराम—
मास्टारमहाशया प्रविशन्ति ]

रामकृष्ण । (सङ्गीतम्)

सयतनं कुरु हृदये आदरिणीं श्यामाम्बिकाम् ।
मन. त्व पश्य, पश्यामि चाहं, नान्य. कोऽपि पश्यतु ताम् ॥ ६७
वञ्चयित्वा कामादिकम् एहि मन एकाकि त्व
रसना सह तिष्ठतु नाम्नाह्वयतु हृदयिताम् ।
(मातर कातर भक्तिभाविताम्)
कुरुचि-कुमन्त्रि-दल
दूरे कुरु सदा खल
प्रहरि कुरु ज्ञानाक्षि, सावधान वन्दस्व ताम् ॥ ६८

भो नरेन्द्र ! भो गिरीश ! भगवतो नवावतार विषये युवयोर्द्वयोर्मह्न्मतानैक्य वर्तते । तद्वाञ्छामि, एतद्विषयक युवयोर्वाग्-युद्धम् ।

युवा कुरुत विचार—भगवतो नवावतारत्व सत्यत्वेन ग्रहणीय न वा ? नरेन्द्र । प्रारभस्व ।

नरेन्द्र. । ईश्वरोऽनन्त । तस्य स्वरूपनिर्णये कथ वय समर्था भवाम ? ईश्वरो वर्तते सर्वेषा हृदेशेषु, जन विशेष कथ स स्वकात्मना परिगृह्णीयात् ?

श्रीरामकृष्ण. । (सस्नेहम्) नरेन्द्रेण साकमास्ते मम मतैक्यम् । भगवान् सर्वत्र विराजते किल । किन्तु प्रकाशस्य तस्य तारतम्यमपि

विद्यत सत्यम्। शक्तेर्विशेषप्रकाश स्यादेव। कुत्रापि भगवतोऽविद्या शक्तिरूपेण पुन कुत्रापि वा विद्याशक्तिरूपेण। केषुचन आधारेषु शक्तेराधिक्य, केषुचन पुन शक्तेर्न्यूनत्वम्। तत सर्वे मानुषा न हि समाना।

राम। एतेन निरर्थकतर्केण किम्?

श्रीरामकृष्ण। (सक्षोभम्) नहि, नहि, आस्तेऽस्य प्रयोजनम्।

गिरीश। कथ त्व जानासि स देहान्विता नायाति?

नरेन्द्र। भगवान् अवाङ्मनसगोचर।

श्रीरामकृष्ण। नहि नरेन्द्र। ईश्वर शुद्धबुद्धेर्गोचर। शुभबुद्धि शुद्धात्मा च समौ। ऋषय शुभबुद्ध्य शुद्धात्मान शुद्धात्मानमपश्यन्।

गिरीश। (नरेन्द्र प्रति) मनुष्यावतार विना मानुषान् को बोधयेत्? मानुषेभ्यो ज्ञानभक्तिदानाय तस्य नराकारेण प्रादुर्भावोऽवतारत्वेन अभिधीयते। अन्यथा क शिक्षयेत्?

नरेन्द्र। कथम्? अन्तस्थोऽसौ बोधयेत्।

श्रीरामकृष्ण। (सस्नेहम्) अथ किम्? बाढम्। अन्तर्यामी भूत्वाऽसौ बोधयत्।

नरेन्द्र। गिरीशचन्द्र! पश्य, पाश्चात्यपण्डिता अप्येनमन्तरूप वर्णयन्ति। हामिल्टन—टिण्डाल—हार्बाट स्पेन्सार—हाक्सलि—प्रभृतीनां मतमनश्य ग्राह्यम्।

श्रीरामकृष्ण। (माष्टारमहाशयमुद्दिश्य) मास्टर! नैतदालोचन मह्य रोचते। अन्येषां मतेन किम्? स एव सर्व तत्र क सन्देह? यत स्वचक्षुषैवाह तथा पश्यामि। सर्वमेव तदात्मकम्। तदेव सत्य तदेव सत्यम्। एकस्यामवस्थायामखण्डे मनोबुद्धी निलीयेते। यथा नरेन्द्र दृष्ट्वा मम मनोऽखण्डे लीनाति। (गिरीशमुद्दिश्य) अप्येतत् सम्यक् त्वया बुद्धम्?

गिरीश। एतद्विनाऽन्यत् सर्वमपि मया बुद्ध किमु!

श्रीरामकृष्ण। अह पश्यामि किल—

सर्वो वस्तुचयः स एव भगवानित्यत्र कः संशय-
श्चैतन्योदयमन्तरेण न पुनः स ज्ञायते केनचित् ।
चैतन्यञ्च कुतो विना करुणया तस्यैव सर्वात्मनः
सम्पन्नस्तु समाधये स हि भवेच्चैतन्यलाभे सति ॥ ९९

प्रमादो जायते देहविषयेऽपि । अनासक्तिश्च कामिनीकाञ्चनयोः । भागवत कथां विना नान्यत् किमपि तस्मै राचते, विषय कथया च जायते तस्य कष्टम् ।

यदि स कृपया स्वकीयावतारित्वे मनोध जनयति, तदा न सन्देह उदियात् तस्यावतारित्वविषये । यथान्धकारे घर्षणानन्तरं दीपशलाकामूलेऽग्नेरुद्गमः । एव तस्यालोको दृश्यते चेज् जायते सन्देहस्यावसानम् । विचारेण नासौ कदापि परिज्ञेयः ।

( नरेन्द्रं प्रति परम समादरः )

**नरेन्द्रः ।** कालीध्यानं दिवसचतुष्टयं मया कृतम् । किन्तु नाभिनव किमपि संघटितम् ।

**श्रीरामकृष्णः ।** कालेन सर्वं भविष्यति । तत् ब्रह्मैव काली । काली आद्या शक्तिः । अग्नेर्दाहिकाशक्तिरिव ब्रह्मणोऽपि कालिका शक्तिः । नास्ति उभयोर्भेदः कश्चन ।

नरेन्द्र ! भगवद्विषये विचारनिर्भरो मा भव ।

तावद् भोजन-मन्दिरे कलकलः संश्रूयते सर्वतो
यावत् सर्व-निमन्त्रिता नहि भवन्त्याहारकृत्ये रताः ।
भुञ्जानेषु निमन्त्रितेषु घटते कोलाहले मन्दता
पात्रे दध्नि समागते पुनरहो सुप्सुप्-रवः केवलम् ॥ १००

तथेशमाप्तुं विहिते प्रयत्ने
स्यात्प्रवृत्तिः क्रमशो विचारे ।
ईशे च लब्धेऽत्र विचारलोप-
स्तदा तु निरुपधिकः समाधिः ॥ १०१

तन्नरेन्द्र ! सावधानं शृणु, एतदित्थं भवति—

निमन्त्रिताना भोजनप्रारम्भे कलकलः, आहारे प्रारब्धे शब्दमान्द्यम्, आहारस्यान्ते केवलं सुप् सुप् रवः; तद्वत् भगवत्प्राप्तिप्रयत्नविषयेऽपि, प्रथमतो विचारकोलाहलः, तदनन्तरं क्रमशः शब्दाभावः, अन्ते च निद्रासमाधिः।

अपि सम्यग् बुद्धम् ?

नरेन्द्रः। बुद्धमेव।

(श्रीरामकृष्णः नरेन्द्रं पर समाद्रियते)

हरिः ॐ, हरिः ॐ, हरिः ॐ

(आनन्देन नरेन्द्रो गायति)

दुःखैकभञ्जन प्राण-विमोहन दर्शन-दानानुरञ्जन
लुप्तशोक-सप्तलोक-पुण्यानन्द-वर्धन
क्वाह दीनहीनजनो दीनातिदीनः॥ १०२

(श्रीरामकृष्णः समाधिस्थः। जाते समाधिभङ्गे)

रामः। देव ! संसार-लिप्तानामस्माकं क उपायः ?

रामकृष्णः। कथम् ? सरल उपायः। संसार-निवासिनां किञ्चिन्मादकत्वं प्रयोजनम्। भवतु नाम साधनं किन्तु मादकत्वम् अवश्यमेव स्यात्। यूय न शुकदेवाः। पथि कानने यत्र तत्र वा वसनहीनानां यथा, तथा युष्माकं स्थितिर्न युज्यते किल।

तथापि भगवदुद्देशेनाङ्गीकार-पत्रमेकमवश्यमेव देयम्। भगवान् यथा तथा वा विदधातु तदवश्यमेव ग्रहणीयं स्यात्। भवसि किल त्वं धनिजनस्य दासवत्। यः कार्यकाले गृहस्थस्यापत्यादिकं स्वपुत्रस्यावत् पालयति तथा भाषणादिना तोषयति च, किन्तु कार्याभावे किम् ?

दासः स्वापत्यतुल्यं व्यवहरति यथा सन्ततिष्वीश्वरस्य
संसारं सेवमानः कलय निजदशां तादृशीं त्वं विवेकात्।
रोषाद्वेत्यन्तरागाद् वा च्यवयति यदि तं स्वप्रभुः स्वाधिकारात्
सम्बन्धस्तत्सुतार्थैः सह चिररचितर्महि विच्छेदमायात्॥ १०३

पनस भक्षण समये तैलमपेक्षितमेव । तद्वत् निरासक्ति-तैल ससार-मुक्तौ स्वकरे विलेपय—आसक्तिर्निश्चित दूर यास्यति ।

अह गायामि, यूयमपि मातृचरणारविन्द वन्दध्वम् ।

सङ्गीतम्

भीम पलश्री—एकताला

भो आनन्दमयि ! माता त्वमयि मा कुरु मामानन्दहीनम् ।
तव श्रीचरण विहाय मम मनो जायते सत्य तत्त्व-दीनम् ।
तपनतनयो गतप्रणयो धिङ् मा बुद्धिहीनम् ॥ १०४
धृत-भवानीनाम-भवोद्धारकाम, करिष्यामि भवोत्तरणम् ।
अकूल-सागरे मातर्मज्जेयं रे स्वपनाद् दूरतर स्वपनम् ॥ १०५
अहर्निशमह श्रितो दुर्गा-नाम, तथापि दु.खस्य मा भूद् गणनम् ।
यद्यह म्रिये भो भो हरप्रिये तव दुर्गानाम्न. शेषणम् ॥ १०६

समाप्त पञ्चमं दृश्यम् ।

—०—

# षष्ठ-दृश्यम् ।

[ रामकृष्णस्य विषये श्रीपरमहंसदेवस्य स्वकीया स्वीकृतिः ।
समयः—१८८६ खीष्टाब्दः—परमहंसदेवस्य महासमाधेर्दिनद्वयात् प्राक् ।
स्थान—काशीपुरस्थ-भाटकप्राप्त-गृहम् ।
गलक्षतरोगग्रस्तः श्रीरामकृष्ण परमहंसदेवः ]

परमहंसदेवः । (स्वगतम्) अहो महासौभाग्यं मम यत् सर्वस्वं दत्त्वा साम्प्रतमहं रिक्तहस्तोऽस्मि ।

योगादिक्रियया चिरेण खलु या शक्तिर्मयोपार्जिता
दत्ता प्राग् दिवसद्वयाद् गुणवते श्रीमन्नरेन्द्राय सा ।
रिक्तः साम्प्रतमस्मि यद्यपि तथाप्यास्ते न दुःखं मनाक्
शान्ति प्रत्युत काञ्चनाञ्चति मनः सत्पात्रलाभेन मे ॥ १८७

शुद्धसत्त्व एष शिवावतारसदृशो नरेन्द्रोऽदूरे भविष्यति मच्छक्तिसमृद्धजनो निखिले विश्वे भारतधर्मदर्शनमाहात्म्यं अतुलप्रभावेन प्रोद्घोषयिष्यति । नर-नारायणसेवानवव्रतं विश्वस्य श्रेष्ठव्रतरूपेण भुवनेषु प्रचारयिष्यति, निश्चितं सार्थकनामश्च भविष्यति ।

(ततः प्रविशति जननी सारदामणिः)

रामकृष्णः । विश्वकल्याणसाधिनि ! मत्समीपे उपविश ।

सारदामणिः । तथा करोमि । किन्तु नाथ ! शून्यमिव सर्वं मम प्रतिभाति । उत्तापनशक्तिरहिताऽग्निः, शैत्यरहितश्च पवनो माध्यन्दिनमार्तण्ड-प्रखरांशुरिव दहति चित्तम् । सर्वे भक्ताः क्रन्दनोन्मुखा इतस्ततोऽनाथा इव विचरन्ति । हे सर्वमङ्गल भगवन् ! सर्वेषां हितायैव गङ्गाधर जीवन-मरणदर्शनम् ।

परमहंसदेवः । देवि क्षेमङ्करि परमहंससाधनमम्पन्न् ! शृणु मद्वचनम् । एते सर्वे मम मनपुत्राः कथमनाथा भवेयुः ? अनाथः स यस्य मातापितरौ न विद्येते । मम महाप्रमाणेरनन्तरं विश्वजननी भूत्वा त्वमेतान् सर्वान् परिपालयिष्यसि । पुनश्च शृणु—

तदा सुतोऽनाथ इति प्रतीत
आस्ते जनन्या रहितो यदा सः ।
पितुर्वियोगात्तनयस्य दुःखम्
अनाथता तस्य तु मातृनाशात ॥ १०८

मातृहीना जनोऽनाथः, पितृहीनो जनो दुःखभाग् जायते खलु । मातृहीनः प्रायेण मृत एव ; पितृहीनस्तु तेजोहीनः केवलम् । देवि ! जानीये मातृवक्ष एव सन्तानाना चिरसुखस्थानम् ।

सारदामणिः । किन्त्वेकाकिन्यहं कथमेतेषां सर्वेषां सहायो भवेयम् ?

रामकृष्णः । त्वयि जीविष्यामि अहमपि ध्रुवम् । तव चिन्तासु कर्मसु ध्यानेषु धारणासु नितरां जीविष्याम्यहम् । तव जीवने मम च कुत्र वा भेदः ?

(ततः समायातश्चिकित्सकवरः डक्टर महेन्द्रनाथ सरकार-महोदयः)

डाः सरकारमहोदयः । ( बहिर्देशात् ) अभ्यन्तरायाहमादिष्टोऽस्मि ?

(जननी सारदामणिः झटिति बहिर्गच्छति)

परमहंसदेवः । कथं न ? सर्वे स्वस्वकर्मसाधनमवश्यमेव कुर्यात्, कर्मणा कर्मभोगशान्तिः ।

डक्टर-सरकारमहोदयः । (प्रविश्य) किन्तु भवान् आत्मान रोगशान्तौ नानुकूली-करोति चेत् किं वय कुर्मः ? इच्छाशक्तिर्बलीयसी । विशेषतो भवादृशानां महापुरुषाणान् ।

परमहंसदेवः । डक्टर महोदय ! पश्य पश्य—

यदुषसि समुदेति प्राचि रागोऽरुणस्य
यदुत दिवसशेषे लोहिताभा प्रतीच्याम्।
प्रवहति पवनो यच्चन्द्रसूर्यौ च भातः
कलय ननु तदेतत् कस्य वा शासनेन ॥ १०६

सर्वं तस्यैवेच्छया सघटते खलु।

डक्टर-सरकारमहोदयः। किन्तु भवादृशा महान्तो न सर्वसाधारण-नियमापेक्षिणो भवेयुः।

रामकृष्णः। चिकित्सकवर! जानामि किल—

आत्मानमार्पयमहं करयोर्जनन्या
न स्वेच्छया किमपि कर्तुमहं प्रवर्ते।
विश्वं चराचरमिदं सुनियन्त्रयन्ती
यन्मे हितं भवति तन्नियतं विदध्यात् ॥ ११०

स्वेच्छया नाहं किमपि कर्तुं वाञ्छामि

डक्टर-सरकारमहोदयः। किन्तु भवान् स्वल्प भाषतामिति मम ऐकान्तिकी प्रार्थना। कठोरे रोगेऽस्मिन् भवान् निरन्तरमालपनादिकं करोति चेत्, चिकित्सकः किं करिष्यति ?

रामकृष्णः। तत्रापि भगवत्या इच्छा बलवती। साऽदिशति, करोम्यहम्। यथा नरेन्द्रनाथोऽस्मिन्नेव क्षणे मया शिक्षणीय एव। तद्भवान् बहिर्गमनसमये तं चिन्तनक्लिष्टमत्र सम्प्रेषयतु।

डक्टर-सरकारमहोदयः। बाढम् (बहिर्गच्छति)।

रामकृष्णः। (स्वगतम्) अवश्यमेवास्य नरेन्द्रस्य हृदयाभिलाषं पूरयिष्यामि।

(ततः प्रविशति नरेन्द्रनाथः)

रामकृष्णः। नरेन्द्र! शृणु। न निरर्थकं चिन्तन-क्लिष्टो भव। ममावतार-विषये सन्देहयुक्तं तव मनश्चेत् ब्रवीमि—

त्रेतायामवतारो यो यः पुनर्द्वापरे युगे।
एकीभावमनयोर्लोकः रामकृष्णः किलास्म्यहम् ॥ १११

नरेन्द्रनाथ । (स्वगतम्) कथ गुरुदेवो मम चिन्तनविषय समग्र-मेवाविकल जानाति ? सत्यमेव त्रेताद्वापरलीलाचतुरो नरविग्रहधारी स्वय भगवानेव ।

(साष्टाङ्ग प्रणम्य)— परमदेवदेव । भृश कृतार्थोऽस्मि । तव शिक्षा एव मम परम बलम् । तामेव विश्वस्य सर्वत्र प्रचारयिष्यामि ध्रुवम् । नाह पर्वते निगूढो भवेय साधारण-सन्न्यासिवत् ।

त्वद्धामधिगम्य शक्तिमतुला विद्या त्वया शिक्षिता
लोके ख्यापयितु गृहीतशपथो यत्न विधास्ये परम् ।
सोऽह केवलमात्ममोक्षणपर ससारकोलाहलात्
अत्येष्यामि न जीवन शमधन सन्न्यासिसाधारणम् ॥ ११२

अपि च—

त्वन्मन्त्रप्रतिसस्कृतेन मनसा काषाययासो दधद्
धर्मक्षेत्रमशेषभूमिवलय सपादयिष्येऽचिरात् ।
त्वद्व्याख्यामृतबृहित विरचयन् वेदान्तभाष्य नवम
उच्चैर्भारतवर्षदर्शनकथा विस्तारयिष्ये क्षितौ ॥ ११३

रामकृष्ण । निश्चित जानीहि, तव करयोरह न्यस्तोऽस्मि । त्व यत्रैव मा नेष्यसि, तत्रैवाह यास्यामि । त्व सार्थकप्रयत्न नितरा भविष्यसि ।

(श्रीनरेन्द्रो गायति)

जीवननदी मम वहति क्षुरधारा ।
मध्यपथे प्राणतरणी विकर्णधारा ॥ ११४
ऊर्मिमाला दोललोला झञ्झामारा ।
नीलनीलाकूलजल-लुप्त-पारा ॥ ११५
तीरे क्वापि भाति दीप्तिराशासचारा ।
आशीराशिर्नलोत्तरा दु खहरा ॥ ११६
इष्टदेव-नामसुधा वर्षाकारा ।
विश्वविप्लावनपरा प्राणाकारा ॥ ११७
सुधा क्षरतु लोकेऽतुलाऽपारा ।
दु खदैन्य-पारावार-पारकरा ॥ ११८

समाप्त षष्ठ - दृश्यम् ॥

## सप्तम - दृश्यम्

[समयः— पूर्वाह्नः ।

स्थान— घुघुडि ग्रामन्थस्य कस्यचन भक्तस्य गृहम् ।

श्रीमाता, ग्राम्यनार्य: काश्चन, गोलापाम्बा, योगीन्द्राम्बा ]

[ भागीरथी पश्चिमतीरस्थ-घुघुडिग्रामे स्वामिजि महाराजेन सह मातु साक्षात्कार , महाराजस्य दीर्घकाल प्रवास प्रार्थनं च ]

श्रीसारदामणि. । अहो समायाता मनोहारिणी ऊषा ।

श्वेताम्बरा वरारोहा रक्तललाटशोभना ।

भास्करारात्रिकस्थाली कूजनशङ्खनादिनी ॥ ११९

मालयचामरोपेता मेघालिपुष्पभूषणा ।

ऊषा स्वर्णमहीकन्या प्रादुरेति दिगङ्गने ॥ १२०

अदूरे प्रवहति खरतरा भागीरथी-धारा

पतितपावनी कलुषनाशिनी कल्याणसारा ।

हरजटाजूट-मन्थनसंघट्ट-रसित-स्नेहाकारा

कालकालकाल-लुटनातुल-प्रवाहाकुलापारा ॥ १२१

जननि भागीरथि । मम नाथो भक्तसन्तानान् सर्वान् मम हस्ते न्यस्तवान् । नक्तदिव चिन्तयामि तेषां हितानि । अहो ! अतुलनान्यै तेषां सन्तानानां सर्वेषां हृदयानि । स्वभातृः परित्य ० समागताः सन्ताना मे मां दृष्ट्वा समग्र विश्व विस्मरति । मम हर्षवर्धनाय किं किं ते न कुर्वन्ति । ( उर्ध्व विलोक्य स्वामिनमुद्दिश्य )

दयस्व दास्या मयि नाथ तादृशं

यथा हि सन्ताननिकाय एष ते ।

हिमातप्याभ्यां स्वशिरासि गोपयन्
क्षमेत सम्पादयितुं सुजीविकाम् ॥ १०२

माताऽहं, मयि तिष्ठन्त्यां न मे कश्चन सन्तानो विपत्येत। अहो सुवर्णचन्द्रमोनिभोऽस्मत्सुतो नरेन्द्रः सर्वेषां भ्रातॄणां हितसाधनाय विश्वस्य कल्याण-संपादनाय, नाथस्य धर्मप्रपञ्चनाय च किं किं न करोति ?

नाथ श्चित्तमेतेषां मङ्गलं विधेहि।

( ततः प्रविशन्ति काश्चन ग्रामस्था नार्यः )

गोलापास्या। अहो साम्प्रतं प्रारभते जनारण्य-मृदुवात-प्रवाहः।

योगीन्द्राख्या। पुनः शीतल चन्दनद्रुमसमाश्रयिपन्नगानां सुरभि-निःश्वासो मा अस्मान् व्याकुलीकरोतु।

सारदामणिः। मा मैवं भण।

हिंसा सम्प्रति वर्तते क्षितितलं दुःखेन नैकाङ्गिणा
दूरीकर्तुमिदं मयाऽवहितया भाव्यं हि नाथाज्ञया।
देवादिष्ट-पथे नितान्त-सरले सर्वैः समालम्बिते
हिंसाद्वेषविहीनमाशु भविता विश्वं सुखैकास्पदम् ॥ १०३

काचन शिष्या।

ग्रामोऽस्मदीयो नितरामधन्यः
स्पर्शेन ते मातरभूत् कृतार्थः।
पुण्यात्मनां पादरजोभिरेषां
मार्गोऽपि जातोऽस्य सुराध्वतुल्यः ॥ १०४

अन्या काचन। केचन कथयन्ति—पितुरपि माता गरीयसी-अन्धकाणखञ्ज सन्तानान् प्रति स्नेहाधिक्यहेतोर्निश्चितम्।

अमृतं महितं सागरजननं
मातरि निहितं तुलनाहीनम्।
'मा'क्षर-कथनं कल्मषदहनं
"ह" सदा भवाब्धि-तरणे तरणम् ॥ १०५

सारदामणि । सरले ! मा मैव भण । नाथो मे सर्वम् । अहं दीनहीनाऽखलाऽबला सरला बाला, न तु सबला, केवल नाथस्य बलेनोद्दृप्ता । देवो ज्वालयति चेत् किञ्चिज् ज्वलामि न वा नाहं जाने । केवलं जानामि नाथादेशात् करोमि सर्वम् ।

गोलापाम्बा । मातः । य योगानन्दमहाराज श्रीठक्कुरः स्वय नीढ्-तवान् तस्मै त्वमेव कृपां दर्शितवती ।

सारदामणि । तदपि ठक्कुरस्यादेशेनेति न विस्मर्तव्य श्रीमत्या ।

योगीनाम्बा। आदेशोऽस्तु वा न वा,वय जानीमहे माताऽस्माकमतुलनीया, ठक्कुरस्य पूर्णसाधनामूर्ति, केवलं वदनावरणवस्त्राभ्यन्तरे लुक्कायितस्वरूपा ।

काचन ग्रामीण-नारी । जननि जगदम्बिके ! त्वदागमनानन्तरं मम ग्रमन्न जात तथा चास्माकं सर्वासां भाग्यगगनम् । सर्वत्र राजते मधुर रौद्रच्छ विजनमनोहरा सञ्जीवनतत्परा । गन्धराज-कुरुबकाशोक यूथिका-मालिका दोदुल्यन्ते सर्वत्र रञ्यत्कण्ठा नीलकण्ठा अत्यूर्ध्वोत्तोलित पुच्छमालिका नृत्यन्ति । उद्गतरोम विकाशडम्बर कदम्ब सम्भारो धरित्री रञ्जयति चित्रापित रोमाञ्चिताम् , पुष्पे पुष्पे तव स्मितरेखा , शष्पे शष्पे तव पादसञ्चार-मृदुकम्पन, पत्रनिशिञ्जने तव नाथ-'ठाकुर'-नाम-जपध्वनि ।

धर्मस्तवैष निजकल्पनिगूहन यत्
सुप्त जगद् भ्रमतु तेन विलुप्त-बोधम् ।
ग्राम्या वय भगवतीं भवभीतिहन्त्रीं
जानीमहे जननि ! तामिह सारदा त्वाम् ॥ १२६

सारदामणि । नार्यो यूय कथमधन्या भवेत । नाथस्य मम सरल पन्थानमनुसरत, सर्वासा युष्माकं चित्ते चिराय राजिष्यतेऽनिवार्या शान्ति ।

( सर्वा बहिर्गच्छन्ति )

(दूरान् मातर पश्यन् स्वामीजिराकुल प्रविशति)

श्रीमाता । अहो ! मनो मम सूचयति, मम प्राणधनपुत्रो नरेन्द्रोऽ-

द्यैवास्मिन् स्थाने समागच्छन् ममानन्दातिशय्य सजनयिष्यतीति । पुनो मम सर्वेषां गुरुभ्रातॄणा तथा जगत सर्वेषा च हितार्थ निखिल भारत परिभ्रमिद्धकामोऽपि मातृस्नेहच्छायालाभादिव वङ्गदेश प्रत्यागत । नाथ ! पुनर्वदनारविन्द सदर्शन कदा नु मम घटेत ?

स्वामीजि । (त्वरित प्रविश्य प्रणम्य च)—

सार्थक जन्म मे मात तु तृपादपद्मदर्शनात् ।
धन्योऽय घुघुडिमामो यत्रास्त सारदाऽम्बिका ॥ १२७
ग्रहा उपग्रहा सर्वे वृवाश्च वासवादय ।
पालयन्ति तवादेशं नक दिव सुरोत्तरा ॥
दीनहीन-सुतत्याम्ब गृहाण कोटिशो नतिम् ॥ १२८

सारदामणि । सुत नरेन्द्रनाथ । पितर श्रीश्रीठक्कुर वन्दस्व । अबला नार्यह किं कर्तुं पारयामि ?

नरेन्द्र । विना कारण मात ? न श्रीठक्कुर "फलहारिणी" काली पूजादिवसे तव श्रीचरणया द्वादशवर्षव्यापि जपहेतुक माल्यवर समर्पयामास ।

आध्यात्मिकादि-त्रयदु ख-विमोक्षहेतु-
स्तातो ममाविरभवत् सुत-सग्रहार्थम् ।
माता पुनस्त्वमपि भाग्यवशात् सुताना
सरक्षणाय विधिना प्रणिधीकृताऽसि ॥ १२९

मम माता पितुरपि शतशो गरीयसीति ध्रुवमह मन्ये ।

सारदामणि । तात नरेन्द्र । श्रीश्रीनाथस्य मम प्राणठक्कुरस्य धर्मा दर्शन च विश्वस्य सर्वत्र भवता प्रचारितम् । अहा कठोरो व्यामा मयि त्वयि च विश्वस्य सम्मुल्लास प्रवर्धनाय ? श्रीठक्कुरस्याभिलापश्चिर विजयताम् ।

स्वामीजि । मात ! पश्य । श्रीठक्कुरस्य निदेशपालनमेव मम जीवनस्य केवल व्रतम् ।

**सारदामणि.** । किन्तु कथं नरेन्द्र त्वं तथापि परमुद्विग्न इव लक्ष्यसे ?

**स्वामीजिः** । विश्वजननि मातः । भवत्याः पादपद्मे निगूढ़-मात्माभिलषितं निवेदयामि । मातः, प्रार्थये यावत्कालपर्यन्तं भगवतः श्रीगुरुदेवस्य सङ्कल्पं न कार्येण रूपायितं करिष्ये तावन्नाहं प्रत्यावर्तिष्ये।

( साष्टाङ्गम् प्रणिपत्य ) जगदम्बिके । आशिषो देहि, यथा मम सङ्कल्प. सिद्धिमाप्नुयात् ।

**सारदामणिः** । ( स्वामीजि-महोदस्य मस्तकोपरि हस्तं निधाय ) तात ! श्रीश्रीठक्कुरस्तव मनोरथमवश्यमेव परिपूरयिष्यति ।

**स्वामीजिः** । ( त्वरितमुत्थाय भूयश्च मातृचरणयो प्रणम्य )— मात ! तवाशीराशिर्मम परमसम्बलम् । अत परमहं नि सन्दिग्धोऽस्मि यद्विजयो मेऽवश्यमेव भवेत् ।

( श्रीश्रीसारदामणि—स्तुति )

मातृमणे त्वां नमामि ।

दयस्व मयि मात. स्नेहमयि

तनयस्ते पूजनकामी ।

श्वासे च प्रश्वासे भावनाविन्यासे

मातृचरणानुगामी ॥ १३१

पुण्यविमण्डन–नद्यवतरण–पावनीं शरणं प्रयामि ।

नरेन्द्र विह्वलं मातृपदयुगलम्

अमलं कुरु दिनत्रियामी. ॥ १३२

॥ सप्तम-दृश्यं समाप्तम् ॥

—o—

योगीनाम्वा । अहो ! नरेन्द्रनाथः समायात इति परमानन्दो मातः श्रीसारदामणेः । वस्तुतो माताऽस्माकं भृश कातरासीद् भक्तवर्यस्य बलरामवसुमहोदयस्य तथा च परमभक्तस्य सुरेन्द्रनाथ-मित्रस्य चिरविरहात् ।

स्वामीजिः । अहो ! बहिःस्था जना अस्माकं हृदयकातरतां तत्त्वतो बोद्धुमसमर्था इव प्रतिभान्ति मे । महन्मित्रं मम वाराणसीस्थः श्रीप्रमदादास-मित्र महोदयः । बलराम-वसु-महोदयस्य देहावसान-संवाद प्राप्य मयि भृश मन्दति असौ प्राह—"किमेतत् स्वामीजि-महोदय ! त्वत्त्यागी भवान्, शोकार्तता भवति न युज्यते" ।

( सारदामणिमुद्दिश्य ) किन्तु मातः ! अहं तस्मै इदं प्रत्युत्तरं दत्तवान्—

"किं चिन्त्यतेऽत्रभवता हृदयारत्य-वस्तु
तुर्याश्रमे निवसता नहि विद्यते नः ?
जानीहि किन्तु मनुजान्तरतोऽप्यमीषां
हृद्दशोऽधिकोऽस्मि परदुःखविलोकनेन ॥ १३०

विदोषस्तु चिन्त्यतामसौ बलराम वसु महोदयो मम गुरुभ्राता । भगवतो गाधस्य परमहंसदेवस्य श्रीचरणकमल वय सममेवाराध्य यगामः । तस्य वियोगेन निश्चितमेवाह कातरो भवेयम् । अन्तस्तलहृदयानुभूतिहीनं सन्न्यास-जीवनं न मे प्रार्थितम् ।"

सारदामणिः । तात ! सुष्ठूक्तं त्वया । सन्न्यासजीवनं समस्तमु मनस्विभिः पूतम् । स्नेहिनो सन्न्यासिनो भवन्ति सर्वेषु चराचरेषु स्थावरेषु च सर्वादराणि सर्वदाऽनुमनोयम् ।

गोलापमाता पुनस्तत्र ! कदाऽपि अवकाशेन विहिता श्रीरामकृष्ण सह परिचयवार्ता

स्वामीजिः । मातः तस्य भृश प्रदर्शो मया विहितः । मातस्तं सर्वदा पौत्तलिकोऽस्मि ।

**सारदामणि.** । किन्तु वत्स नरेन्द्र त्वं तथापि परमुद्विग्न इव लक्ष्यसे ।

**स्वामीजि.** । विश्वजननि मात ! भवत्या पादपद्मे निगूढ-मात्माभिलषितं निवेदयामि । मातः, प्रार्थये यावत्कालपर्यन्त भगवत श्रीगुरुदेवस्य सङ्कल्पं न कार्येण रूपायितं करिष्ये तावन्नाहं प्रत्यावर्तिष्ये । (साष्टाङ्गम् प्रणिपत्य) जगदम्बिके ! आशिषां देहि, यथा मम सङ्कल्पः सिद्धिमाप्नुयात् ।

**सारदामणि** । (स्वामीजि-महोदयस्य मस्तकोपरि हस्तं निधाय) तात ! श्रीश्रीठक्कुरस्तव मनोरथमवश्यमेव परिपूरयिष्यति ।

**स्वामीजि** । (त्वरितमुत्थाय भूयश्च मातृचरणयोः प्रणम्य)— मात ! तवाशीराशिर्मम परमवलम्बम् । अतः परमहं निःसन्दिग्धोऽस्मि यद्विजयो मेऽवश्यमेव भवेत् ।

(श्रीश्रीसारदामणि-स्तुतिः)

मातृमणे त्वां नमामि ।
दयस्व मयि मातः स्नेहमयि
तनयस्ते पूजनकामी ।
श्वासे च प्रश्वासे भावनाविन्यासे
मातृचरणानुगामी ॥ १३१
पुण्यविमण्डन-नहवतयान-पावनीं शरणं प्रयामि ।
नरेन्द्रः विह्वलं मातृपदवलम्
अमलं कुरु दिनत्रियामौ ॥ १३२

॥ सप्तम-दृश्यं समाप्तम् ॥

—o—

## अष्टम - दृश्यम्

[ परिव्राजको विवेकानन्दः । आलोयार-महाराज-देवानजी-रामचन्द्रस्य
भवने श्रीस्वामीजि-महाराजः । मूर्तिपूजाविषयकालोचनम् ।
समयः—१८९१ खीष्टाब्दस्य फेब्रुयारी-मासः ।
स्थानं—आलोयार-महाराजस्य देवानजी-रामचन्द्रस्य प्रासादः । ]

प्रविशन्ति स्वामीजि-महाराजः, देवान-मेजर-रामचन्द्रः,
स्वामि-महाराजस्य भक्तवृन्दश्च । गायति स्वामि-महाराजः ]

अनन्त-करुणासिन्धुर्गोकुलविहारी ।
सदाभक्तिमधुपायी मरन्दप्रसारी ॥ १३३
अङ्गुष्ठसम्मिताकारो हृदयसञ्चारी ।
जगद्व्यापी प्रियानन्दः प्रेमोन्मादकारी ॥ १३४

हे मधुसूदन राधाभूषण वृन्दावनरसचारी
दुरन्त दुर्जन-चेतोविलसन-मुरलीनिनादकारी ।
वर्धय शान्तिं मानसकान्तिं मैत्रीसौख्य-प्रचारी ।
सततानन्द-पीयूषस्यन्द-विधुनपुनत्प्रसारी ॥ १३५

मेजर-रामचन्द्रः । आलोयार-निवासिनः सर्वे भवतां कीर्तनं श्रुत्वा आनन्दाश्रुपरिपूरितलोचनाः श्रीश्रीवृन्दावन विहारि-स्मरणं चेतसाऽनुभवन्ति । श्रीस्वामिन् ! यदि भवद्रुचौ रोचते, कीर्तन-प्रसङ्गेन मद्गीतेन कुर्वन्तु भवन्तोऽस्माकं श्रोत्रविनोदनम् ।

स्वामीजिः । सङ्गीतेऽरुचिः, नहि-नहि, तत्रास्म्यहं सदारुचिः । श्रूयतां भवद्भिः ।

(सङ्गीतम्)

गैरिकवसनं धृत्वा मोहनं शंखकुण्डलं हारि ।
योगिनी-सुवेशे यामि तद्देशे
यत्र स निष्ठुर-हरिः ॥ १३६

(अहं) मथुरानगरे गृहे गृहान्तरे भ्रमिष्यामि योगसारा ।
दृष्टे प्राणवन्धौ अन्धरन्ध्रसन्धौ वध्नाम्यश्चल-द्वारा ॥ १३७
स्वीय-प्राणप्रियम् आनेष्यामि स्वयं
को वा रोधन-समर्थो रे ।
सति तु रोधके मरण-साधके
नारीवधख्यातिस्तमेतु रे ॥ १३८

(स्वामीजि-महोदयस्याश्रु निरर्गलधारं भूमौ पतति)

कश्चन भक्तः । (अन्यं भक्तमुद्दिश्य)

अहो प्रेमोन्मादना, अहो भावमाधुर्यम् ! एष महाभक्तो निश्चितमेव वृन्दावनचन्द्रं दृष्टवान् । अन्यथेदृशी भावस्फूर्तिर्नैतस्याभविष्यदिति ध्रुवम् ।

(स्वामिमहोदयः पुनरपि गायति—)

(अहं) मथुरानगरे गृहे गृहान्तरे भ्रमिष्यामि योगसारा ।
दृष्टे प्राणवन्धौ अन्धरन्ध्रसन्धौ वध्नाम्यश्चलद्वारा ॥

(रुद्धहृदयावेगेन स्वामीजिमहोदयः प्रस्तरवत् प्रतिभाति)

कश्चन भक्तः । अहो मधुमयः स्वामिमहाराजः पुण्य-भागीरथी-धारयेव निरर्गलाश्रुधारया जगत् पुनाति ।

अन्यो भक्तः । (अन्यं भक्तमुद्दिश्य) वैद्युतिकशक्तिधरोऽयं महामानवो यस्य पार्श्वान्महाप्रयत्नेनापि दूरं यातुं न समर्थोऽस्मि ।

स्वामि-महाराजः । (क्रमेण स्थैर्यमापद्य) अयमेव वृन्दावन-गोकुलप्राणधन-श्रीकृष्णः अवतारेषु सर्वप्रथममेव प्राचारयच्छ्रेष्ठ-भावादर्शद्वयम् । प्राथम्येन, विभिन्नभावमार्ग-समन्वयः; द्वितीयतश्च, अनासक्तिः । नरक-

भीतिं स्वर्गसुखभोगमेवञ्च सर्वभीतिभोगादिकमेव एव महावतारो धर्मतो दूरेऽपसार्य प्रेम्णे प्रेम, कर्मणे कर्म, कर्तव्याय कर्तव्यम् एवंविधं श्रेष्ठजपमन्त्रं भारतभूमौ तथा च विश्वे प्रथमं संप्राचारयत्।

नमः श्रीकृष्णचन्द्राय कर्मयोगप्रचारिणे ।
अनासक्ति-विधात्रे च कर्मयोग-विघोषिणे ॥ १३६
अवतारवरायास्मै समन्वय-प्रसादिने ।
खण्डित - भारताखण्ड - मण्डलाकारकारिणे ॥ १४०
करुणा - वरुणागार - भक्तदासप्रमोदिने ।
आनन्दोल्लास-सान्द्राय प्रेमसौख्य-विधायिने ॥ १४१
मधुर-कोमलाकार - विश्वचेतोविमोहिने ।
धराकृष्ण - सुविन्यास - महाकृष्ण-स्वरूपिणे ॥ १४२
नमस्तस्मै नमो नमः ।

**रामचन्द्रजी** । अहो सौभाग्याशयाति महाराजः श्रीलश्रीमङ्गल-सिंह-महोदयः । स्वगृहमगत्यैव महाराजोऽत्रैवायातः ।

( प्रविशति धीरं महाराजः )

सत्कारोऽस्मै विधेय इति। तथाप्येनमित्थं प्रक्ष्यामि। (विचिन्त्य स्वामि-महोदयमुद्दिश्य)—श्रूयते किल भवान् अद्वितीयः पण्डितधुरन्धरः। ततो बहुलार्थोपार्जनसमर्थोऽसि। तत् न्यक्कृत्य कथं सन्न्यासिवेशधर इतस्ततः परिभ्रमसि ?

स्वामि-महाराजः। भवानपि वदतु,

विहाय कार्याणि नृपोचितानि
सहाङ्गलैस्त्वं मृगयाविलासी।
अटाट्यसे किं नियतं समन्ताद्
रसेन पानाशनयोः प्रमत्तः॥ १४४

(सभासदः सर्वे चञ्चला इतस्ततोऽवलोकयन्ति)

कञ्चनान्त.पुरचारी। (तत्कण्ठाममिनयन्) अहो हतभाग्योऽयं साधुः। अचिरेणैव राजाज्ञया प्राणानमी त्यक्ष्यति।

महाराजः। (विचिन्त्य) कथं तत् करोमि नाहं वक्तुं समर्थो मुधम्। तथापि तन्मह्यं रोचते इत्यततथा करोमि।

स्वामि-महाराजः। (सहर्षम्) अहो उत्तमम्—सन्न्यासवेशेन परितोभ्रमणं मह्यं रोचते, ततोऽहमपि तथा करोमि।

महाराजः। पुनरपि प्रष्टुकामोऽस्मि।

स्वामि-महाराजः। निश्चितं प्रष्टव्योऽस्मि। वदतु भवान्।

महाराजः। सर्वे मूर्तिपूजा कुर्वन्ति सत्यम्। किन्तु तस्यां नास्ति मे विश्वासः। तत् किं नु मे भविता।

स्वामि-महाराजः। नूनमेतन्महाराजस्य परिहासवचः।

महाराजः। नहि, स्वामिमहोदय, नहि। नाहं सर्वसाधारणवत् काष्ठ मृत्तिकापिण्डं प्रस्तरं धातवपदार्थं वा पूजयितुं समर्थः। अपि तेन परजन्मनि ममाधोगतिः स्यात् ?

भीतिं स्वर्गसुखभोगमेवञ्च सर्वभीतिमोगादिकमेप एव महावतारो धर्मतो दूरेऽपसार्य प्रेम्णे प्रेम, कर्मणे कर्म, कर्तव्याय कर्तव्यम् एवंविधं श्रेष्ठजपमन्त्रं भारतभूमौ तथा च विश्वे प्रथमं संप्राचारयत्।

नमः श्रीकृष्णचन्द्राय कर्मयोगप्रचारिणे ।
अनासक्ति-विधात्रे च कर्मयोग-विघोषिणे ॥ १३६
अवतारवरायास्मै समन्वय-प्रसादिने ।
खण्डित - भारताखण्ड - मण्डलाकारकारिणे ॥ १४०
करुणा - वरुणागार - भक्तदासप्रमोदिने ।
आनन्दोल्लास-सान्द्राय प्रेमसौख्य-विधायिने ॥ १४१
मधुर-कोमलाकार - विश्वचेतोविमोहिने ।
धराकृष्ण - सुविन्यास - महाकृष्ण-स्वरूपिणे ॥ १४२
नमस्तस्मै नमो नमः ।

रामचन्द्रजी । अहो सौभाग्यादायाति महाराजः श्रीलश्रीमङ्गलसिंह महोदयः । स्वगृहमगत्यैव महाराजोऽत्रैवायातः ।

( प्रविशति धीरं महाराजः )

महाराजः । ( स्वगतम् ) दरेऽतिष्ठमहम् । किन्तु कथनांगलभाषा-महापण्डितः सन्न्यासी आयात इति मम देवानजी-रामचन्द्र महाशय-सकाशाच्छ्रुत्वा तस्यैव गृहमागतोऽस्मि । अहो तरां नु—

कोटीसूर्य-समुद्दीप्त-सन्न्यासिवेश-मण्डनः ।
प्रतिभाभास्वरानन्द-महोमही-विभूषणः ॥
राजते वरसन्न्यासी ॥ १४३

( स्वामिमहोदयमुद्दिश्य सश्रद्धम् ) श्रील-स्वामिमहोदयं वन्दे ।

स्वामीजिः । कल्याणमस्तु महाराजस्य ।

महाराजः । सत्यं नु मम चिरगुणरागिना रामचन्द्रेणोक्तं विशेष-

सत्कारोऽस्मै विधेय इति। तथाप्येनमित्थं प्रक्ष्यामि। (विचिन्त्य स्वामिमहोदयमुद्दिश्य)—श्रूयते किल भवान् अद्वितीयः पण्डितधुरन्धरः। ततो बहुलार्थोपार्जनसमर्थोऽसि। तत्तुच्छीकृत्य कथं सन्न्यासिवेशधरः इतस्ततः परिभ्रमसि?

स्वामि-महाराजः। भवानपि वदतु,

> विहाय कार्याणि नृपोचितानि
>
> सहाङ्गलैस्त्वं मृगयाविलासी।
>
> अटाट्यसे किं नियतं समन्ताद्
>
> रसेन पानाशनयोः प्रमत्तः॥ १४४

(सभासदः सर्वे चञ्चलाः इतस्ततोऽवलोकयन्ति)

कञ्चनान्तःपुरचारी। (उत्कण्ठामभिनयन्) अहो हतभाग्योऽयं साधुः। अचिरेणैव राजाज्ञया प्राणानसौ त्यक्ष्यति।

महाराजः। (विचिन्त्य) कथं तत् करोमि नाहं वक्तुं समर्थो मुधम्। तथापि तन्मह्यं रोचते इत्यतस्तथा करोमि।

स्वामि-महाराजः। (सहर्षम्) अहो उत्तमम्—सन्न्यासवेशेन परितोभ्रमणं मह्यं रोचते, ततोऽहमपि तथा करोमि।

महाराजः। पुनरपि प्रष्टुकामोऽस्मि।

स्वामि-महाराजः। निश्चितं प्रष्टव्योऽस्मि। वदतु भवान्।

महाराजः। सर्वे मूर्तिपूजां कुर्वन्ति सत्यम्। किन्तु तस्यां नास्ति मे विश्वासः। तत् किं नु मे भविता।

स्वामि-महाराजः। नूनमेतन्महाराजस्य परिहासवचः।

महाराजः। नहि, स्वामिमहोदय, नहि। नाहं सर्वसाधारणवत् काष्ठ मृत्तिकापिण्ड प्रस्तर धातवपदार्थं वा पूजयितुं समर्थः। अपि तेन परजन्मनि ममाधोगतिः स्यात्?

स्वामि-महाराज । तत्तु विश्वाससापेक्षम्। (स्वामिमहोदयस्य भक्ता परस्परं प्रति विलोकयन्ति)।

कश्चन भक्त । (स्वगतम्) अहा श्रीकृष्णमूर्त्यादिकं दृष्ट्वाऽशेषभक्तिभावेन य साष्टाङ्ग प्रणमति, एतत्तस्यैव महासाधोरुत्तरम् ?

स्वामि-महाराज । (पुरत भित्तिगात्रोपरि लम्बमान महाराजस्यालेख्य प्रति दृष्टिं बद्ध्वा) कस्य प्रतिकृतिरेषा ?

रामचन्द्र । महाराजस्य।

स्वामि-महाराज । देवान महाराज ! कुरु स्वगृहस्थिता प्रतिकृतिमेता निष्ठीवनसिक्ताम्।

(सर्वे भीतभीता जायन्ते)

स्वामि-महाराज । (सर्वतो दृष्ट्वा) य कोऽपि अत्रत्य क्षिपतु निष्ठीवनम् अस्य प्रतिकृतेरुपरि ।

(सर्वे वागृहीना अन्योन्यवदनान्यवलोकयन्ति)

रामचन्द्र । (किंकर्तव्यताविमूढ) स्वामि-महोदय !

आलेख्यमेतत् परमाहतस्य
महामहिम्नोऽस्य महीपतेर्न ।
अश्रद्दधाना इव तत् किमस्मिन्
निष्ठीवनं हन्त वयं क्षिपाम ॥ १४५

स्वामि-महाराज । किन्तु अस्यां प्रतिकृतौ न विद्यते महाराज स्वयम्। केवल कागदखण्डमेतत्, तथापि कथमस्मिन् विषये युष्माकमेतादृशी भीति सङ्कोचो वा ।

श्रीमन्तो ननु चिन्तयन्तु हृदये प्राज्ञा यदस्मिन् पटे
भूपो न स्वयमस्ति नास्ति च पुनस्तस्यास्थि वा शोणितम्।
वार्तालाप-पराङ्मुखे मुखरिते यानासनाद्यक्षमे
किं भीतिर्भवतामिहातिविषमा चित्रार्पिते भूपतौ ॥ १४६

रामचन्द्र । अहो ! नहि नहि, नैतत् कदाचनास्माभि कर्तुं पार्यते ।

**स्वामि-महाराजः ।** कथम् भीतिः ? यतः अस्या प्रतिकृतौ दृश्यते महाराजस्य सादृश्यम्, पवित्रा च कायच्छाया । निष्ठीवनसिक्तायाम् अस्यां स्वयं महाराज एवापवित्रीकृतः स्यात् इत्यनुमीयते युष्माभिः ।

**रामचन्द्रः ।** (समाश्वासनशीलः) अत्र कः सन्देहः ?

**स्वामि-महाराजः ।** (महाराजमुद्दिश्य) महाराज ! पश्यतु भवान्— यद्यपि चित्रमिदं तत्त्वतो न भवानेव, केवलं कागदमात्रं, तथापि रूपसाम्यात् चित्रेऽस्मिन् भवता रूपाकृति प्रतिबिम्बनात् एते सर्वे आलेख्यमिदं भवन्तमिवाद्रियन्ते, सम्मानयन्ति च । ततो वस्तुतः किं नाम पार्थक्यं भवत आलेख्येन चैतेन सह ?

विज्ञायापि यभेदमस्य भवता साकं त्वदीयैर्जनैः
सश्रद्धं सभयं सभक्तिकमिदं चित्रं यथाऽत्तोस्यते ।
एवं मूर्तिसमर्चकैरपि विजानद्भिर्द्वयोर्भिन्नता
मूर्तिर्देवधिया मृदादिघटिता भक्त्या समाराध्यते ॥ १४७

भगवद्भक्ता अपि मूर्तिविशेषं भगवतः प्रतीकं मन्यन्ते । पश्यन्ति ते लीलाविशेषं भगवतो मूर्तिविशेषे इति ध्रुवमेव । मूर्तिविशेषे भगवद्दर्शनमित्येतदेव प्रकृतं प्रतीकोपासनातत्त्वम् ।

धरातलेऽस्मिन् सुचिरं भ्रमित्वा
न कञ्चनाहं श्रुतवान् कदाचित् ।
"दयस्व दासे कृपणे मयी"ति
"शिले भजे त्वामि"ति वा वदन्तम् ॥ १४८

महाराज ! तद् ध्यात्वा, सत्यं जानीहि — सर्वेऽपि उपासते परब्रह्म-मवाम् । ब्रह्म भक्त भावानुक्रमेण स्वस्वरूपं व्यनक्ति । भक्ताः प्रस्तरधातुप्रभृतिमूर्तिं दृष्ट्वा स्मरन्ति चिन्मयेष्टदेवताम्; अत एव भक्ता मूर्तिं पूजयन्ति ।

महाराज ! अयमेव मम दर्शनप्रकारः । अन्येषां विषये कथमहं वक्तुं शक्नुयाम् ?

**मङ्गलसिंहः ।** महात्मन् ! मानयान श्रुतं मया भवता ज्ञानगर्भं तत्त्व ।

बद्धाञ्जलिर्विनिवेदयामि—यत्तदेव भवतोक्तं, तत् सर्वमेवाक्षरशः सत्यम्। एतावत्कालपर्यन्तमन्धस्य मम चक्षुरद्य उन्मीलितम्।

स्वामिमहाराज! मयि दयतां भवान्।

**स्वामि-महाराजः।** महाराज! परमात्मानं विना को नाम प्रसाद-दानेऽनुग्रहप्रदर्शने वा समर्थः? भगवान् परमकरुणासिन्धुः। भवांस्तमेव शरणं गच्छतु। तेनैव भवतोऽपि स्यात् क्षेमम्।

(स्वामिमहाराजो भगवतो महिमानं सङ्कीर्तनं कीर्तयति)

हे मधुसूदन मुरलीमोहन मञ्जु मञ्जीरधारी।
मधुपगुञ्जन-चित्तरञ्जन-मधुर-निकुञ्ज-पुञ्जचारी ॥ १४६
मथुराभरण - मोदनचरण - मरीचिमालिकाप्रसारी।
मरणशरण - मायामोहघन - मेदिनीमोचनकारी ॥ १५०
श्री-राधारमण – रुक्मिणीरञ्जन – रजोराशिविदारी।
रूपविरोचन – रुचिरलोचन – रागपीयूषसारी ॥ १५१
रासशुशोभन - रम्यविमण्डन - रुद्ररोदनसंहारी।
रसिकरञ्जन - रक्षोगञ्जन - रुचिरानन्दसञ्चारी ॥ १५२

**समासदः।** जयः स्वामिमहाराजस्य जयः। जयः स्वामि-महाराजस्य जयः। जयः श्रीपरमहंसदेवस्य जयः।

॥ अष्टम-दृश्यं समाप्तम् ॥

—o—

## नवम - दृश्यम्

[ स्थान—गुजरातस्थ-लिम्बडिपुरी ।

समयः—रात्रिः ।

लिम्बडि पुर्यां स्वामिनद्राज्यस्य विरुद् ।

चिन्ताक्लिष्टः स्वामि महाराज लिम्बडि-नगरे साधुनिवासस्थाने

उत्कण्ठितो वर्तते ]

( प्रविशति अन्धकाराच्छन्नकक्षे विपन्नः स्वामि महाराजः )

स्वामिमहाराजः । अपरिचित-स्थाने साधुजनान् दृष्ट्वास्मिन् स्थाने आगच्छम् । एते साधवोऽपि मार्गनिर्दिष्ट-कालायाम स्थातुमनुमतवन्तः । किन्तु दिनद्वयेनैवाहं वीतादरोऽस्मि । अत्र तु साधुस्थानेषु नारीणां यथेच्छं गमनागमने ! एतत् सर्वमशुभमिव परिलक्ष्यते । तन्मयाऽवश्यमेव स्थानमेतत्त्यक्तव्यम् ।

एष स्वधर्मः किल पापबिन्दो
र्यज्जायते नातिचिरेण सिन्धुः ।
यत्र म्रियन्ते यत साधवोऽपि
पापात्मभिः पङ्कतले निलीनाः ॥ १४३

अपि च —

कलम्बिका-शाकनिभानि मन्ये
छिन्नप्ररूढानि हि दुष्कृतानि ।
स्मृत्वेष्टनामानि ततोऽभयानि
मयाऽशु गन्तव्यमितः सुदूरम् ॥ १४४

तदस्मात् स्थानाद् दूरतरं गच्छामि ।

( द्वारमुन्मोचयितुं भृशं यतमानोऽपि व्यर्थमनोरथो जायते स्वामिमहाराजः )

करगतो ध्रुवमसि दुरात्मना
गृहकपाटमिदं हि सकीलकम् ।
जननि ! किं गुरुदेवमतोच्चय
प्रथयितुं न भवेयमहं क्षमः ॥
वरदे मातः श्रीसारदे मयि प्रसीद ॥ १५५

अथवा भगवदिच्छा सर्वदा विजयतेतराम् । भगवान् परीक्षितुमिच्छति माम् । तस्मान्न मया भेतव्यम् । यथा तथा भवतु, इष्टनामैव केवलं मया स्मरणीयम् ।

( तत्रोपविश्य सङ्गीतमुखेन भगवतीं स्तौति )

परम-करुणाधनिस्त्वमसि जननि
सुधानिर्झरिणी भवाब्धितरणी ।
विश्वविपत्तारिणी विषादहरणी
रक्ष तनयाधमं मा त्रिलोकीभरणी ॥ १५६

( आश्रमाध्यक्षः सहचरेण सह प्रविशति )

आश्रमाध्यक्ष । भो साधो महाराज । अपि कुशलं भवतः । सर्वमास्ते भवतः सुखकरम् ?

स्वामिमहाराज । भवतामानुकूल्येन आतिथ्यदानेन च कृतज्ञोऽस्मि । किन्तु स्थानमिदं त्यक्तुं वाञ्छाम्यचिरेण । कथं द्वारं ममास्तेऽर्गलबद्धम् ?

अध्यक्ष-सहचर । ( उच्चैर्हसन् ) हा हो हो । पण्डितप्रवर साधो ! एतदपि न बुध्यसे ।

अध्यक्ष । ( सहचरं तिरस्कृत्य ) तूष्णीं भव । श्रृणु साधुमहाराज ! अस्ति भवता महत् प्रयोजनं मे । प्रार्थये भवन्तं कस्मैचनोपकाराय । वयं विपन्नाः स्म ।

स्वामिमहाराज । तदर्थं वयमहं अर्गलबद्धः कृतः । परेषामुपकार-साधनं यथासाध्यं स्वेच्छया करणीयमित्येव मे जीवनस्य मतम् । भवतां का सेवा मया करणीया ?

सहचरः । हो हो हो, भृश परापकारी साधुरयम् । कृपालु खलु भगवान् । महागुरो । अत्राद्देश्यमस्माक निश्चित सफलीमविष्यति । (उच्चैर्हसति)।

अध्यक्ष । (सहचरमुद्दिश्य) वत्स ! शान्तो भव । (स्वामिमहाराजमुद्दिश्य) स्वामि-महाराज ।

निशीथिन्यामस्यामिह हि भवने कोऽपि भविता
महान् यज्ञोऽस्माकं भवति पणजन्ध पुनरयम् ।
महासाधोराजीवन-चरित्त-कौमार्य-नियमो
वलिर्देयस्तत् त्व भव समुचित भाजनमिह ॥ १५७

अत्र रात्रौ अस्माक यज्ञसमाप्तये भवता ब्रह्मचर्यमवश्यमेव विसर्जनीयम् । तद्विषयिणी सम्यग् व्यवस्था सुष्ठुरूपेण मया कृता ।

स्वामिमहाराज । (सरोषम्) धिग् धिग् ! अपि भवन्त साधव पशवो वा ? साधुभि कृते कस्मिंश्चिद् यज्ञे ब्रह्मचर्यपरिहार अमार्जनीयो ऽपराधो ध्रुवम्—वस्तुत सोऽचिन्तनीय एव । शान्त पापम् । यस्योच्चारणे पाप श्रवणेऽपि पापम् । दूरमपेहि स्थानादस्मात् । मुहूर्तेन पापपुरीमेतामह त्यक्ष्यामि ।

(सक्रोध वहिर्गन्तुमिच्छति स्वामि महाराज । ससहचर अध्यक्षा मार्गावरोधं करोति ।)

स्वामिमहाराज । मह्य मार्गं देहि गमनाय । भो पाषण्ड ! अपसर दूरम् ।

अध्यक्ष । भो साधो ! मिष्टभाषणन नासि तुष्टश्चेत् शेषकथा शृणु—

स्वीयेच्छया वाथ परेच्छया वा
त्वद्ब्रह्मचर्य परिहार्यमेव ।
यद्ब्रह्मचर्य न चरन्ति केऽपि
त्व या कथ तच्चरितासि साधो ॥ १५८

तस्माच्छलेन वलेन कौशलेन वा अस्मदभिमत वय त्वयाऽवश्य परिपूरयिष्याम ।

सहचरः । हो हो हो ! भोः साधो न जानास्यस्माकं यन्त्र-मन्त्रम् । शृणु—

स्त्रियो देवाः स्त्रियः प्राणाः स्त्रियश्चैव विभूषणम् ।
स्त्रीसङ्गिना सदा भाव्यं साधुना मुक्तिकामिना ॥ १५९

ॐ ह ह ख ख वज्रमध्ये ढ ढ
वज्रमणौ हुं हुम् ।
चट् चटास् चट् चट् फटास् फट् ॥ १६०

स्वामिमहाराजः । असहनीयं पापभाषितमेतत् । ममाप्युत्तरं श्रूयताम् । केनाप्युपायेन न मया सन्न्यासधर्मो ब्रह्मचर्यं वा विसर्जनीयम् ।

अध्यक्षः । यदि त्वं प्राणैर्विमोच्यसे, किं स्यात् ?

स्वामिमहाराजः ।

यद् ब्रह्मचर्यं स ममास्ति धर्मः
प्राणैस्तु धर्म-विवर्जितस्य ।
तस्मात् यथेष्टं ननु हिंस नृप
न ब्रह्मचर्यं तु मया विवर्ज्यम् ॥ १६१

सहचरः । भृशं खलु साहसिकस्त्वम् ? बहवः साधवस्त्वादृशा अस्माभिर्दृष्टाः ।

शृणु रे साधो । अस्माकमध्यक्षमहाशयस्याशयः आदेशो वा कदापि व्यर्थो भ्रष्टाक्षरो वा न भवति । यदि त्वं वाञ्छसि जीवितुं परिपूरय तस्येच्छाम् ।

ततो निखिले भारते सद्धर्मस्त्वया प्रचार्यते चेत्, कः कुर्यात्तत्प्रशंसनं, को वा शास्यति ?

अध्यक्षः । रे निर्बोध सन्न्यासिन् !

आसाय कालं ते प्रदीयते समयो विवेचनार्थम् ।
प्राणांस्त्यक्ष्यसि स त्वमित ऊर्द्ध्वमपि न यथोक्तकारी चेत् ॥ १६२

( ततः ससहचरोऽध्यक्षः द्वारमर्गलरुद्धं कृत्वा बहिर्गच्छति )

स्वामिमहाराज.। हे जननि भवतारिणि ! यदि असज्जनहस्ते मम मरणं त्वयाभीप्सितं, निश्चितमेव तद् भविष्यति । किन्तु कति कति न भक्तास्त्वया पूर्वं सरक्षिताः ? पारावारेऽचलशृङ्गे च ; यथा कृते युगे तथा कलावपि । तदद्य विपत्तौह त्वत्कृपामेव केवलं याचे ।

( विचिन्त्य सविश्वासम् )

विपत्ता ते भवेदाशीर्नं मातः सारदामणे ।
नूनं प्रचारयिष्यामि गुरोर्मे धर्म-दर्शने ॥ १६३

( तत्र प्रविशति कश्चन बालकः )

बालकः। (सोद्वेगं) साधु महाराज। किं सञ्जातम् ? कथं भवान् अर्गलबद्धकक्षे राजते ?

स्वामिमहाराज.। अहो !

नीरन्ध्रबद्धे भवने समन्तात्
प्रायस्तिरश्चामपि दुष्प्रवेशे ।
घटेत बालस्य कथं प्रवेश -
स्तदेष नूनं प्रहितो जनन्या ॥ १६४

नूनं जनन्या दूतोऽयं समेपितः ? (प्रकाशम्) बालक ! कथं त्वमिह प्रविष्टोऽसि ।

बालकः। उद्घाटनम् अर्गलमुन्मान्य प्रविष्टोऽस्मि । अन्यत्र जना सर्वे तत्र सोल्लासं नृत्यन्ति । नाहमस्मि तैः ' ह । भवान् कथंचित वदतु— को नाम उपकारो मया करणीयः ?

स्वामिमहाराज । बालक । अपि त्वं लिम्बडि राजाय सन्देशं दातुं समर्थो भविष्यसि ?

बालकः। निश्चितमेव। को नाम सन्देशः ?

स्वामिमहाराज । स मया लिखितव्यः, किन्तु कुत्र ? भवतु, मृत्पात्रभग्नांशेऽस्मिन् लिखिष्यामि अङ्गारेण (तथा करोति) ।

( मृन्मयभाजनांशं बालकस्य हस्ते दत्त्वा )

त्वरितं गच्छ। महाराजायैतं दत्त्वा मदुद्धाराय यतस्व।

बालकः । साधु महाराज ! निश्चितमेवाहं तत् करिष्ये । गृहमंगलवद् कृत्वा गच्छामि । यथा तेषां दारिद्र्य नापगमिष्यति । अचिरेणैव भवतो साहाय्यं विधास्ये ।

( बालको निर्गतः )

स्वामिमहाराजः । जननि भारतमाते ! तवैवेच्छा नितरां बलीयसी । अन्यथा क्षुद्रो बालक एव कथमस्मिन् समयेऽत्र समागच्छेत् । ( गायति )

( बाहार – कौताल )

मातर्मे भारतमातर् गीत्वा नामामृत
प्राणवियोगो यदि स्यात् भवतु मे तत् संततम् ।
शयने स्वप्ने समाहो सुख मुनिसंस्तम ॥ १६५
कोटिगुणमणिगणनिर्झरिणी मे भारतमणिः
ज्ञात्वा माहात्म्यं किञ्चित् पूजयति यामपि सर्वं
षोडशी कामिनी गुरु. स पूजाऽप्रदानागतम् ॥ १६६
(पंचम) मातृनाम मे सदनम् ।
स्थापय हृत्कमले मम त्व श्रीपादपद्मम् ।
पापानलोऽस्मि शिशु तनयं कुरु मातृवत्सलम ॥ १६७

क्षणार्धमात्रोऽपि कृते विलम्बे
न चैष दृश्येत जनस्तु जीवन् ॥ १६८

प्रथमः प्रहरी । नहि, नहि, देशिकवर ! का वार्ता धन्यवादस्य ? किन्त्वस्माकं महाराज एतद्विषयकं किमपि न जानाति । अतः परमेतेषां सर्वेषां कठोरशास्तिं महाराजो विधास्यति ।

( राजप्रहरिणा सह सशिष्याश्रमाध्यक्षस्य प्रवेशः )

अध्यक्षः । ( कृताञ्जलिः )

साधो क्षमासार चरित्रपूत
विद्वेष-दृष्ट्या न विलोकयास्मान् ।
प्राणैर्यथास्मान्न राजा वियुञ्ज्यात्
कर्तुं तथा त्वं भव सानुकम्पः ॥ १६६

स्वामि-महोदयः । महाराजो यथा इच्छते तथा विधास्ये ।

॥ समाप्तं नवम-दृश्यम् ॥

—०—

वालक । साधु महाराज ! निश्चितमेवाह तत् करिष्ये । गृहमर्गलबद्ध कृत्वा गच्छामि । यथा तेषां दृष्टिरत्र नापतिष्यति । अचिरेणैव भवता साहायक विधास्ये ।

( बालको निगत )

स्वामिमहाराज । जननि सारदामणे । तवैवेच्छा नितरां वलीयसी । अन्यथा क्षुद्रो बालक एष कथमस्मिन् समयेऽत्र समागच्छेत् । ( गायति )

( बाहार – झाँपताल )

मातुर्मे सारदामणेर्गृहीत्वा नामामल
प्राणवियोगो यदि स्यात् भवतु मे तत् सबलम् ।
शवत्वे शिवत्व ममाहो सुख सुनिर्मलम् ॥ १६५
कोटिगुणमणिखनिर्जननी मे सारदामणि
ज्ञात्वा माहात्म्य किञ्चित् पूजयति यामविकल
पोडशीं कालिका गुर स पूजाक्षदानामलम् ॥ १६६
( चपल ) मातृनाम मे सबलम् ।
स्थापय हृत्कमले मम तव श्रीपादकमलम् ।
वाराणसीफल विभु तनय कुरु मातृबलम् ॥ १६७

( तत प्रविशति लिम्बडि राजस्य प्रहरिद्वयम् )

प्रथम प्रहरी । स्वामि महाराज । भवानागच्छतु अस्माभि सह । अहो तु साहसिकत्वम् अनलसाधूनाम् ।

( द्वितीय प्रहरिणमुद्दिश्य )

गच्छ भ्रातो । अध्यक्षमाह्वय , यथा न म पलायनतत्परो भवन् । तस्य सहचराश्च सर्वे आगच्छेयु । प्रादघापय—सर्वे त राजाज्ञया विचारणीया, कथञ्चन न स्थानान्तर गच्छेयुरिति ।

( द्वितीय प्रहरी बहिर्गच्छति )

स्वामि-महाराज ।

गाम श्रुतशो भृशममि मत्रा
शुनश्मि युष्मानपि साधुवादै ।

क्षणार्धमात्रोऽपि कृते विलम्बे
न चैष दृश्येत जनस्तु जीवन् ॥ १६८

प्रथमः प्रहरी । नहि, नहि, देशिकवर! का वार्ता धन्यवादस्य! किन्त्वस्माकं महाराज एतद्विषयकं किमपि न जानाति । अतः परमेतेषां सर्वेषां कठोरशास्ति महाराजो विधास्यति ।

( राजप्रहरिणा सह सशिष्याश्रमाध्यक्षस्य प्रवेशः )

अध्यक्षः । ( कृताञ्जलिः )

साधो क्षमासार चरित्रपूत
विद्वेष-दृष्ट्या न विलोकयास्मान् ।
प्राणैर्यथास्मान् न राजा वियुञ्जगात्
कर्तुं तथा त्वं भव सानुकम्पः ॥ १६९

स्वामि-महोदयः । महाराजो यथा दयते तथा विधास्ये ।

॥ समाप्तं नवम-दृश्यम् ॥

—०—

# दशम - दृश्यम्

[ स्थान— श्रीरामेश्वरे कन्याकुमारिका-मन्दिरादूरवर्ति
विवेकानन्द प्रस्तरराशि ।
समय — पूर्वाह्ण ।
स्वामि-महोदयस्य स्वसकल्पविवृति- । ]

( प्रविशति स्वामिमहाराज )

स्वामि-महोदय ।

पद्भ्यामटन् निखिलदशमुपागतोऽस्मि
प्रान्तेऽद्य दक्षिणतमे वत भारतस्य ।
रत्नाकरेण परित परिवेष्ट्यमान
तीर्थोत्तम यमिह सन्त उदाहरन्ति ॥ १७०

अहो स्थाने खलु रामेश्वर साधवो दक्षिणभारतीय-वाराणसीत्याहु ।

अत्रत्य-मन्दिरमनुत्तममत्र वर्ये
माहात्म्यतश्च महता वपुषा च मन्ये ।
शिल्पक्रिया चरमकौशलसारभूतै
संवेष्टित यदभितो रुचिरैरलिन्दै ॥ १७१

कन्याकुमारीति मनोज्ञ-नाम्ना
मनोज्ञमूर्त्येह विभाति माता ।
उद्गच्छता बाष्पभरेण कुण्ठो
'मामे' ति मे व्याहरतोऽत्र कण्ठ ॥ १७२

स्थानेऽत्रागमन ममासीत् परमाकाङ्क्षितम् , तथास्मिन् मन्दिरे पूजादानम् ।

सर्वं तत् सत्कृत्यं यथायथमनुष्ठितम् ।

मन्दिरान्नातिदूरे प्रस्तरमये भारतवर्षस्य भूखण्डेऽस्मिन् समागत्य मनसि मे महान् भावकोलाहल उद्रिक्त आस्ते ।

पश्चान्मम राजते—महादेशमदर्शी अतुल-विभूतिमयी देशजननी भारतभूमिरेकदा सर्वधर्म-दर्शन-विज्ञान-कलादि-ज्ञानमारा । पुरतो ममोत्तुङ्गवीचिमाली निरन्तरार्तनादमुखरो भारतसागरः । ऊर्ध्वे दिग्दिगन्त प्रसारितं नीलं नभः । भगवान् मरीचिमाली चोर्ध्वं प्रसरन् संप्रेरयति स्वीय-गौरवकणान् किरणान् अपरिमेयान् । अन्तर्ज्वालं ज्वलतीव सागरवक्षः । अपि तद्भारतवर्षस्य दुःखदैन्यहेतोः ?

अशान्तः सागरः प्रोक्त इति युक्त्या न युज्यते ।
रत्नाकरो महाचित्तः शान्तो दान्तः सदा भवेत् ॥ १७३
मर्यादा शाश्वती सिन्धौ गतः सीमनि बन्धनात् ।
पूर्णताचिह्नमात्रं नु तरङ्ग-भङ्ग-रङ्गणम् ॥ १७४
क्रोडलोलोर्मिमालायाः पारावारः परायणम् ।
महाभद्रो महाशान्तो रसोद्वेलो महाविभुः ॥ १७५

अहो कोमल-मधुरं गायन् समुद्रपथेन याति कोऽयं जनः स्वतरण्यामारूढः । मत्स्यजीवी कश्चनेति निश्चितम् ।

( कश्चन मत्स्यजीवी गायन् प्रविशति )

मम भव—नाविक रे !
अकूले सागरे झञ्झाक्षोभपरे
रक्ष तरणीं मम कृपाल रे ॥ १७६
क्षुद्रा मे तरणी सहस्र-सयोजनी
वर्ततेऽनादृता पारावारे ।
मुहुर्दोदुल्यते, सद्यः प्राणघाते
कुरु दयासिन्धो करुणां मयि रे ॥ १७७
अन्नवस्त्रहारा मङ्गलध्यानपरा
गृहिणी रोदनसारा गृहाभ्यन्तरे ।

भवसमुद्रतटे कृष्णकृष्णमेघजूटे
तनयोऽपेक्षते व्यथितोऽन्तरे ॥ १७८
क्वासि त्व स्वामिन्। धरित्रीरक्षणकामिन्
दीनान्तर्यामिन् दुःखपारावारे।
धारय त्व सर्व क्षेपणीं गुणादिक
वक्षसि रक्ष मा पुण्यसारात्सारे ॥ १७९

( सङ्गीत श्रुत्वा भृश चिन्तातुर स्वामिमहाराज सुचिर ध्यायति )

स्वामीजि । अहो करुण गायत्यय मत्स्यजीवी । एव शत सहस्र निरन्न दीन-भारतवासिन अश्रूणि नि सार्य कठारतम-दारिद्र्य-सपीडिता बुभुक्षा-मूर्छितान् सन्तानानन्नहीनान् मृत्युमुखपतितानपि रक्षितु-मसमर्था रोरुयन्ते ।

अन्यतस्तु—प्रबलविलासोन्मत्ता क्षमतामदगर्विता धनिना निर्धनान् निष्पिष्य स्वविलास-तृष्णा परितर्पयन्ति । शिक्षादीक्षाहीना अन्त्यजा पुरोहित सम्प्रदायस्य निष्ठुर-व्यवहार-दीर्णा सनातन धर्म प्रति जाता वीतश्रद्धा । हिन्दुधर्ममनादृत्य बहवो जना कुर्वन्ति च धर्मान्तर ग्रहणम् । उच्चशिक्षाभिमानिन स्वार्थान्धा ग्रामवासिन स्वजनानपि परित्यज्य पत्नीमात्रसारा अभारतीय-जीवनानि यापय त अधीरमाकुल निर्ममतम कालमतिवाहयन्ति । इत्थमेव त हिन्दुधर्मपूतशिरसि अभिशापाग्निगोलिका क्षिपन्ति । तत्फलेन च—

निरर्थानुष्ठान विदधति जना धर्मविधया
क्रमाल्लुप्तो दृशादधिगतफलो वैदिकविधि ।
कुसस्काराच्छन्न विकृतचरित भारतमभूत्
तदेतद् धर्मीय वहति किल कङ्कालमधुना ॥ १८०

( प्रविशति कश्चनास्थिकङ्कालमात्रो धीवर बालक )

धीवर-बालक । अहो ध्यानरत एष सन्न्यासी अहह्यानाहारक्लिष्टो मुमूर्षुरिव जात । तथापि मातापितरौ मम सर्वदा वदत ध्यानमग्नाना ध्यान

मङ्गः कदापि न करणीय इति। नाहं कदाचन सन्न्यासिजनस्य ध्यानभङ्गे प्रवर्तेयम्। तथापि मर्मच्छेदी प्राणभेदी दैन्यहाहाकारो मां करोति ध्यानमग्न-सन्न्यासिनोऽपि भिक्षार्थम्। ( स्वामिमहोदयस्यान्तिकं गत्वा ध्यानमङ्गं मत्वा ) देव सन्न्यासिमहाराज! यदि किञ्चिदास्ते भोज्यद्रव्यं, तर्हि मह्यं कृपया ददातु भवान्।

स्वामिमहाराजः। अस्मिन् जननिरले स्थाने केनोपायेन त्वम् आगतोऽसि, कथं वा?

धीवर-बालकः। देव! अहं कश्चन धीवरबालकः समुद्रेण सह क्रीडन्निव जीवामि। ततो यदा मम पिता नौयानेन दूरसमुद्रं प्रति प्रस्थितः, तदाऽहं सन्तरणक्रमेण समुद्रैकतटात् स्थानेऽस्मिन् समागतः।

स्वामिमहाराजः। तद्भवतु, क्षुत्पीडितस्त्वं प्रायम्येन प्रसादमेनं देवस्य भक्षय।

धीवर-बालकः। देव महां तद्ददातु भवान्। मातृप्रकाशे तदुपस्थाप्य यथासमयं तदन्नदैवतं सेविष्ये।

स्वामीजिः। यथासमयमिति किम्?

धीवर-बालकः। माता मे कदापि न पितुरग्रेऽन्नं ग्रहीष्यति। यदि मातापितरौ बुभुक्षितौ, कथमहमन्नं ग्रहीष्यामि?

स्वामिमहाराजः। एष एव नियमः?

धीवर-बालकः।

एष मे परिवारस्य नियमो हि सनातनः।
पितरौ देवताश्रेष्ठौ प्रमादं प्राप्नुयां तयोः॥ १८१

स्वामिमहाराजः। पिता तर्ह्युपार्जनक्षमश्चेत् कथं तव परिवारस्य दैन्यं भवेत्?

धीवर-बालकः। देव महाराज!

वृद्धोऽपि तातः श्रममन्तहीनं
न ग्रामग्रासोऽर्जयितुं समर्थः।

यतो हि नौभाटकवृद्धिशुल्कैः—
रुपार्जितोऽर्थो व्ययितोऽस्ति सर्वं ॥ १८७

माता तु मे कदापि स्वीयामनाहारवार्ता पित्रे मम लेशतोऽपि न ज्ञापयति। किमहं करोमि। तस्माद्दरिद्र परिवार दुःखनिवारणार्थमेवाहं बहिरागतोऽस्मि।

स्वामिमहाराज। कियत्कालात् पूर्वं किमु तव पितैवास्यां दिशि गतवान्।

धीवर-बालक। अथकिम्?

स्वामिमहाराज। ततस्त्वं पुनः सन्तरिष्यसि कूलं प्रति बुभुक्षुरपि?

धीवर-बालक। अथकिम्?

स्वामिमहाराज। (स्नेहं प्रकटय्य) नहि, नहि, ममैव नौयानेन त्वं गच्छ। नौवाहका न त्वामर्थं याचिष्यन्ते। मुद्रा स्वल्पा अस्मत्तो गृहाण (इति दातुमुद्यत)।

धीवर-बालक। नहि, नहि स्वामिवर।

न हि मुद्रा ग्रहीतव्या मया सन्न्यासिनो जनात्।
किञ्च मातुर्विनादेशं करिष्ये न कदापि तत् ॥ १८८

केवलं क्षुत्पीडिता मम माता वर्तत इति हेतोः भिक्षां प्रार्थये।

स्वामिमहाराज। भो नौवाहकाः! यूयं बालकमेतं तीरे स्थापयित्वा पुनरनागच्छत। (बालको बहिर्गतः)

अहो! ईदृशानि कति कति न पुण्यचित्राण्यखण्ड-सत्यव्यञ्जकानि मम दृष्टिपथं समागतानि? मम भारतवर्ष! सभ्यताकृषि सर्वोच्चशृङ्गारूढस्य तवात्र कथमीदृशी दशा?

(पुनर्ध्यायम्)

अहो! लक्ष-लक्ष-सन्न्यासिनो वयं भारतवर्षस्य कठोर-श्रमलब्धान्न-पुष्ट देशवासिनां हितार्थं किं कुर्मः? अपि वयं दर्शनशास्त्रजटिल-तथ्यमात्रोद्गिरण-परा एतान् न वञ्चयामः?

श्रीगुरुदेवो मामकथयत्—शून्योदरे धर्मो न शोभते। स्थूल तण्डुल-

वस्त्राणि प्रयोजनमनिवार्यमेव । शून्योदरेभ्यो धर्मोपदेशदानं निरर्थकमिति । अथवा धर्मप्राणा भारतवर्षीया सर्वे एव । गृहे गृहे, कानने, प्रान्तरे, पथि सर्वत्र प्रस्फुरति भारतीयानां धर्मक्रियाकलापः । अत्र भारतीयानाम् अवश्यमयोजनं शिक्षायाः प्रसारस्य, अन्नवस्त्र-संस्थानस्य च। किन्तु निष्किञ्चनः संन्यासी त्वहं कथं तत् कुर्याम् ? अत प्रथमं प्रयोजनं सत्यपरायण-श्रमकुशल-मानवानां द्वितीयञ्च अर्थस्य । ( पुनरपि ध्यानमौनं ) ।

( सहसा उच्चैः ) श्रीश्रीगुरुदेवस्य आशीर्वादे कार्यमारमिममहं ग्रहीष्ये । भगवता गुरुदेवस्यैवेच्छया अदूर-भविष्यति भारतस्य प्रति-नगरं प्रतिग्रामं तथाविधाः नराः नार्यश्च सहस्रशो जन्म लप्स्यन्ते, ये गतानुगतिकतया न भविष्यन्ति स्वार्थपरायणाः, न वा धाविष्यन्ति भोग-लालसामभिलक्ष्य, परन्तु नरनारायण-सेवायै सर्वस्वं समर्प्य महायुगचक्र-विवर्तन-सहायकाः भविष्यन्ति ।

किन्तु कुतोऽर्थो मिलिष्यति ? चिन्ताभारमिमं मस्तिष्के विधाय हृदय-शोणितमोक्षणेन पर्यभ्रमं भारतमखिलम् । धनिनो राज-महाराजा मया समर्थिता सहायतादानाय । किन्तु केवलं मौखिकी सहानुभूतिरेव मया लब्धा ।

यदि स्यां केवलं भारतवर्षस्य मुखापेक्षी, निरर्थकं समयो मे यास्यति । विक्षोभनीलसागरराशिं समुत्तीर्य याम्याम्यहं भारतीयानां पक्षतः पाश्चात्य-देशमेतेषां कृते सहायताभिक्षार्थम् ।

यदि विजयो मां ब्रूयाद्यथैवं मदं स्वदेशं प्रत्यागमिष्याम्यन्यथा मरणं मम भवतु प्रयत्नावसरेऽस्मिन्, का क्षतिः ?

हे देव ! देहि मे शक्तिं दुर्जयाम्, अवश्यमेवाहं विजयी भवेयम् ।

धारिणि जननि एहि ।
उत्तालसागरे तिरोभूतपारे तारणतरणि एहि ।
मरुभूमिप्रान्ते तृष्णातिश्रान्ते रसनिर्झरिणि एहि ॥ १८४
कण्टकित-कानने विमार्गविचरणे शिखामालिनि एहि ।
रुद्धकारागारे वद्धकायसारे पवनवाहिनि एहि ।
पालिनि जननि एहि ॥ १८५

॥ समाप्तं दशम-दृश्यम् ॥

—o—

# एकादश – दृश्यम्

[ स्थानं—माद्राजनगरे श्रीमन्मथनाथ भट्टाचार्य-महोदयस्य गृहम् ।

समयः—पूर्वाह्णः ।

प्राप्त-मातृनिर्देशस्य स्वामिमहाराजस्यानन्दातिशय्यम् ]

( प्रविशति श्रीस्वामिमहाराजः )

स्वामि-महाराजः । अहो अपूर्व-सुन्दरं सौरकरोज्ज्वलं प्रभातम् । सूर्यदेवः सहस्रकर-विस्तारेण दुहितरं धरित्रीं आशीर्भिरभिनन्दयति । ततः—

प्रतिसरः कमलानि सहस्रशो
विकसितानि भवन्ति दिनोदये ।
प्रतितरुश्वरते रुचिरं रुतं
पिक-शुकादि-विहङ्गम-सन्ततिः ॥ १८६

अपि च —

क्षेत्रे क्षेत्रे श्यामलाः शस्यमाला
दोलायन्ते मन्दवायु-प्रसङ्गात् ।
नद्या नद्या चञ्चला ऊर्मिलेखा
अभ्यस्यन्तीवोत्प्लुनैर्लाघवत्वम् ॥ १८७

स्मरामि प्रातरद्य मुहुर्मुहुर्ममानन्दमयीं करुणामयीं सेवामयीं जननीम् ।

सा साम्प्रतं तिष्ठति मातृमन्दिरे
गोलापमात्रादि-सखी-सुसेविता ।
स्वज्योतिपोद्दीपितदिग्दिगन्तरा
विस्तारिपादा च विसारिकुन्तला ॥ १८८

तस्याः प्रसन्नाननारुण किरणैः सहस्रभक्तानां हृत्कमलानि विकचीभवन्ति, तेषां नीरव मनोवीणा नियतं निनदन्ति जननी-मिष्टमधुरवाणी-स्वरलयतानैः, शून्य-जीवन-पात्राणि च तेषां जातानि पूर्णानि तस्याः स्नेहामृतेन ।

अहो ! तस्या अरुण-चरण-रेणुकणाभिः पवित्रीभवितुं मम मनो भृश-मुत्कण्ठते ।

जननी सारदामणिः ।
कल्मषनाशिनी विश्वद्योतिनी
सुतस्नेह-हीरकखनिः ॥ १८६
मातुरादेशे सति दूरदेशे
प्रयास्यामि विपदध्वनि ।
तोयनिधिपारे ज्ञानप्रसारे
चित्त प्रधावति जननि ।
देवमार्गानुसारिणि ॥ १९०

( द्वारे कराघातः )

भक्ताः । (नेपथ्ये) स्वामि-महोदय ! वयमन्तः प्रवेष्टुकामाः स्मः ।

स्वामि-महाराजः । बाढम् । अन्तरागच्छत ।

( भक्ताः प्रविशन्ति )

सर्वे । स्वामिमहोदयं प्रणमामः ।

स्वामि-महाराजः । सर्वेषां कल्याणं भूयात् ।

प्रथमो भक्तः । स्वामिमहोदय ! भवत आमेरिका-धर्म-महा-सम्मेलने योगदानार्थं प्रणामनिवेदनार्हमर्थं संगृहीतवन्तो वयम् । भवान् कृपया गृह्णातु ।

स्वामि-महाराजः । इतोमन्य एवार्थः सगृहीतो युष्माभिः ? सत्यं नु सर्वे यूयं श्रमकुशलाः कर्मनिपुणाश्च ।

जानीत किन्तु, प्रेमसदृशं किमपि नास्ति जगति ।

प्रेमा लोकाद्दं ह्ययत्नद्रिशृङ्गं
घोरारण्यं घोर-घोरं मरुञ्च ।
लब्ध्वा युष्मत्प्रेम भक्त्या विशुद्धं
धन्यम्मन्यः साम्प्रत चाहमस्मि ॥ १९१

प्रेमाऽयमक्षयोऽस्तु गुरौ परमहंसे श्रीमताम् ।
भगवति परमात्मनि च स्वदेशमातरि चातिमात्रम् ॥ १६२

**द्वितीयो भक्त** । स्वामि महोदय । वयमेव धन्या, न भवान् । अस्माकं सौभाग्यं भवादृश-गुरुवरलाभेन । शतसहस्रजन्म पुण्यफलेन वयं भवादृशं गुरुं लब्धवन्त । अहो । का वत जगति गुरुदेवसदृशो जन ?

तुहिन-शैल-महासहिमोन्नत
सुरधुनी-सलिलामल-मानस ।
अतलसिन्धुगभीर-बहुश्रुत
क्षितिरिवातितरां सहनोत्तर ॥ १६३

**स्वामि-महाराज** । भक्तवर ! परम-शोभनं खलु ते वच । किन्तु को नाम स गुरु । गुरुरकोऽस्माकं महागुरु श्रीपरमहंसदेव । तं वन्दध्वम् ।

**सर्वे** । (श्रीश्रीरामकृष्ण स्तुति)

जय प्रभो जय दुरितभयमय-निखिलवेदमय-सुधास्रुते
जयाम्बिके जय शिवभाव्योद्भव-दयाजितहृदय-भक्तवृते ।
स्मरत गुरुनाम विश्वगुणधाम-कृष्णयुतराम-कृपाकृते
जय मातर्जय वसुधाविस्मय-माङ्गल्यनिलय-सुताहृते ॥ १६४

**तृतीयो भक्त** । स्वामि-महोदय ! पूर्वमस्माभि संगृहीत पञ्चशतमुद्रामितोऽर्थो भवदाज्ञानुसारेण दरिद्रेभ्यो दत्त । साम्प्रतं जनसाधारण्याद् अस्माभि कियाश्चनार्थ संगृहीत । सकृप ॥ गृहीत्वाऽस्माननुगृह्णातु भवान् ।

**स्वामि-महाराज** । अहो जनसाधारण्यस्यार्थ । एतत्तु दानं देशमातृकाया एव, तत स्वशिरसि ससम्भ्रमं धारयामि (तथा करोति)। किन्तु वत्सगण ! एषोऽर्थो युष्माभिरेव संरक्षितव्य । यथासमयं प्रयोजनक्रमेणाहम् अर्थमेतं ग्रहीष्यामि ।

सर्वे। यथादेशो भवतां तथाऽस्तु। प्रणामाञ्जलि-ग्रहणेनानुगृह्णातु नो भवान्।

स्वामि-महाराजः। (चिन्तापर्या[illegible]:) मलमेव यास्यामि नु 'चिकागो' धर्ममहासम्मेलनं हिन्दुधर्मनिर्वाहरूपेण किन्तु कोऽहमत्र स्वेच्छानुसारेण चलनाय

रथोऽहं गुरुदेवस्य चलामि तेन चालितः।
वीणाहं केवलं तस्य स्वेच्छया तेन वादितः॥ १९५
अहं क्रीडनकं तस्य भवामि तेन खेलितः।
यन्त्रमस्मि करे तस्य भ्रमामि तेन घूर्णितः॥ १९६

अहो अपारा गुरुदेवस्य करुणा, अपूर्वो मधुरश्च स्वप्नः। तथाहि—

उत्ताले तोयधेस्तोये देवः संचरति स्वयम्।
सङ्केतेन समादिश्य तस्यानुगमनाय माम्॥ १९७

तथापि—

स्वप्नार्थं नु ग्रहीष्यामि मातुर्निदेशनाद् ध्रुवम्।
कोटिशोऽभ्यधिका माता पितुर्भारतशासनम्॥ १९८
गुरोराशीर्वचः काम्यं ततोऽपि मातुरीप्सितम्।
माता श्रेष्ठं तपो नृणां साधनं भजनं शिवम्॥ १९९
माता ध्यानं तथा ज्ञानं माता सर्वं परात् परम्।
निखिलाश्रयणं माता जनने मरणे हितम्॥ २००

ततोऽहं नितरां मातुरादेशं प्रतीक्षे। अहो वत्सलनीया माता—

एकपार्श्वे तुलायाः स्युश्चतुर्दश जगन्ति चेत्।
पार्श्वान्तरे प्रसादस्य जनन्या राजते कणा॥
अणुमात्रा भवेत् सा वा भारि किं नु तयोर्भवेत्? २०१
हास्यरेखा जनन्याश्च पारिजातेन तुल्यते।
नन्दन-वनजातेन चेत् किं चारुतरं भवेत्? २०२
पिकरुते वसन्तस्य मातृकण्ठामृते तथा।
सुतस्य कर्णमायाते किं नु सुखतरं भवेत्? २०३

एकतो जाह्नवीवारि स्पर्शन मातुरन्यत ।
सुतेन लभ्यते भाग्यात् किं नु शीततर भवेत् ? २०४

ततो मातृ सारदामणे सकाशे विदेशयात्रायै अनुमति सप्राप्य पत्रमेक लिखित मया । अहो सुप्रसन्ना चेद् भवेन्माताऽचिरादायातस्या अनुशासनम् ।

भृत्य । ( प्रविश्य ) देव एतदायातम्

स्वामि-महाराज । ( स्वगतम् ) नून प्राप्स्याम्येव मातुरादेशम् । ( प्रकाश ) अये ! किमायातम् ?

भृत्य । पूज्यपाद स्वामिमहोदय ! आयात पत्रमिद भवत ।

( पत्र दत्त्वा प्रस्थित )

स्वामि-महाराज । ( त्वरित पठति )

"स्वस्ति ! तात नरेन्द्र ! पत्र तव मयासादितम् । भगवत श्रीश्रीगुरुदेवस्य पवित्र नाम स्मार स्मारम् आमेरिकाभिमुखमग्रसरीभव । कल्याण त्वां वरिष्यत्यनिवायम् ।

स्नेह-चन्दनसिक्त देवदुर्लभ शिवपुत्र ममाश्रुजलनिधे ! मातुराशीर्वादास्त्वां सर्वत्र कवचीभूय रक्षन्तु , ददतु च विजयमपरिमितमतुलनीयम् ।

विदेशे विलायते सर्वदा सावधानेन त्वया भवितव्यम् । कल्याणाचर मार्ग नित्यमनुसर । पितर स्मर मातरञ्च । सर्वहृदयेनाशीर्वादांस्त्वां विज्ञापयामि । अलमतिविस्तरेण ।

शुभाशीर्वादिका—तव माता ।"

( करताल-पूर्वकम् )

जय मात सारदामणे जय ।
जय गुरुदेव जय ॥

अहो नु मातु कृपा । जनन्या आशीर्वादेनानायासेन सागरपार गमिष्याम्यहम् , जेष्यामि च विश्व समग्रम् । अत पर नास्ति मनसि मे द्विधा काचन भीतिर्निराशा वा । साम्प्रत सर्वकर्मक्षमोऽहम् ।

जय श्रीमातुर्जय ।
जयश्च गुरुदेवस्य मे ॥

प्रतिज्ञा ममावश्यं संपालयिष्यामि। दूरदूरान्तरेषु प्रचारयिष्याम्यहं कल्याणधाम्नो गुरुदेवस्य धर्मं भारतमातुश्च शाश्वत साम्य मैत्री-शान्ति-प्रीतिवाणीम्।

अद्य प्रभृति प्राच्य-पाश्चात्त्ययोः करसंमर्दनं भविष्यति। प्राच्यदर्शनं मेलिष्यति पाश्चात्त्य-विज्ञानेन सह। उत्पत्स्यते जगति नवं महामेलनक्षेत्रमननुमितपूर्वम्। नयामेरिकाभुवा महाद्य पुरातन-भारतवर्षस्य नवसांस्कृतिकमेलनं भविष्यति परमसुन्दरम्। मातुः परमकृपया तत्र प्रथमोपायोऽहं तस्याः सन्तानः।

अहो नु सौभाग्यं मम।
जयो मातुर्मे जयः
जयो गुरुदेवस्य जयः
जयो देशमातुश्च जयः॥

(देशजननीसकाशे प्रार्थनम्)

पुण्यश्रीके भारत-जननि।
सुदूरे विदेशे दीनहीन-वेशे
दयस्व सुते शिवप्रसविनि॥ २०५
कृपामयि वसुधामोहिनि
ज्ञान-भक्ति-प्रेम- सेवा-प्रीति-हेम-
करण्डधारिणि पुण्यमालिनि॥ २०६
ज्ञानादि-पञ्चपुष्पाणि चारूणि मातृकार्चने।
पाश्चात्त्य-गलशोभीनि हितानि विश्वपूजने॥ २०७

॥ समाप्तमेकादशदृश्यम्॥

—o—

एकतो जाह्नवीवारि स्पर्शनं मातुरन्यत. ।
सुतेन लभ्यते भाग्यात् किं नु शीततरं भवेत् ? २०४

ततो मातुः सारदामणेः सकाशे विदेशयात्रायै अनुमतिं सम्प्रार्थ्य पत्रमेकं लिखितं मया। अहो सुप्रसन्ना चेद् भवेन्माताऽचिरादायातस्या अनुशासनम्।

भृत्यः। (प्रविश्य) देव एतदायातम्

स्वामि-महाराज.। (स्वगतम्) नूनं प्राप्स्याम्येव मातुरादेशम्। (प्रकाश) अये! किमायातम्?

भृत्यः। पूज्यपाद स्वामिमहोदय! आयातं पत्रमिदं भवत.।

(पत्रं दत्त्वा प्रस्थित.)

स्वामि-महाराज.। (त्वरितं पठति)

"स्वस्ति! तात नरेन्द्र! पत्रं तव मयासादितम्। भगवतः श्रीश्रीगुरुदेवस्य पवित्रं नाम स्मारं स्मारम् आमेरिकाभिमुखमग्रे सरीभव। कल्याणं त्वां वरिष्यत्यनिवार्यम्।

स्नेह-चन्दनसिक्त देवदुर्लभ शिवपुत्र ममाश्रुलनिधे। मातुराशीर्वादास्त्वां सर्वत्र कवचीभूय रक्षन्तु, ददतु च विजयमपरिमितमतुलनीयम्।

विदेशे विलायते सर्वदा सावधानेन त्वया भवितव्यम्। कल्याणोत्तरं मार्गं नित्यमनुसर। पितरं स्मर मातरञ्च। सर्वहृदयेनाशीर्वादांस्त्वां विज्ञापयामि। अलमतिविस्तरेण।

शुभाशीर्वादिका—तव माता।"

(करताल-पूर्वकम्)

जय मात. सारदामणे जय।
जय गुरुदेव जय ॥

अहो नु मातु॰ कृपा। जनन्या आशीर्वादेनानायासेन सागरपारं गमिष्याम्यहम्, जेष्यामि च विश्वं समग्रम्। अत परं नास्ति मनसि मे द्विधा काचन भीतिर्निराशा वा। साम्प्रतं सर्वकर्मक्षमोऽहम्।

जय. श्रीमातुर्जयः।
जयश्च गुरुदेवस्य मे ॥

प्रतिज्ञा ममावश्यं संपालयिष्यामि । दूरदूरान्तरेषु प्रचारयिष्याम्यहं कल्याण-धाम्नो गुरुदेवस्य धर्मं भारतमातुश्च शाश्वत साम्य-मैत्री-शान्ति प्रीतिवाणीम् ।

अद्य प्रभृति प्राच्य-पाश्चात्ययोः करसंमर्दनं भविष्यति । प्राच्यदर्शनं मेलिष्यति पाश्चात्य-विज्ञानेन सह । उत्पत्स्यते जगति नवं महामेलनक्षेत्र-मननुमितपूर्वम् । नवामेरिकाभुवा सहात्र पुरातन-भारतवर्षस्य नवसांस्कृतिक-मेलनं भविष्यति परमसुन्दरम् । मातुः परमकृपया तत्र प्रथमोपायोऽहं तस्याः सन्तानः ।

अहो नु सौभाग्यं मम ।
जयो मातुर्मे जयः
जयो गुरुदेवस्य जयः
जयो देशमातुश्च जयः ॥

( देशजननीसकाशे प्रार्थनम् )

पुण्यश्लोके भारत-जननि ।
सुदूरे विदेशे दीनहीन-वेशे
दयस्व सुते शिवप्रसविनि ॥ २०५
कृपामयि वसुधामोहिनि
ज्ञान-भक्ति-प्रेम- सेवा-प्रीति-हेम-
करण्डधारिणि पुण्यमालिनि ॥ २०६
ज्ञानादि-पञ्चपुष्पाणि चारूणि मातृकार्चने ।
पाश्चात्त्य-गलशोभीनि हितानि विश्वपूजने ॥ २०७

॥ समाप्तमेकादशदृश्यम् ॥

—o—

# द्वादश - दृश्यम्

[ खेतडि-महाराजस्यानुरोधेन विवेकानन्द नामग्रहणपूर्वक
स्वामिमहाराजस्यामेरिका-गमनम् ।
स्थान—जयपुरनगरी ।
समय—१८९३ खीष्टाब्द , सन्ध्या ।
खेतडि-महाराज , नर्तकी, महाराजस्य बन्धवश्च । ]

खेतडि-महाराज । बन्धवो राजपुतना निवासिनो राजान ! परम सौभाग्यमेतद्यद् भवन्तो मम पुत्रस्य जन्मोत्सवे तस्मै आशीर्दानार्थम समागता ।

माहात्म्यमुत्सवस्याहो प्रियै सह समागमात् ।
उत्सवो नाम पूजा स्याद् गुरूणां पादपूजनात् ॥ २०८

तद् बन्धव , नाय केवलमुत्सवो मत्कृते पूजादिवसश्च । यतो मम गुरुदेव स्वय सुदूर मद्र प्रदेशात् स्वीय सर्व-गुरुकर्माणि परित्यज्य स्थानेऽस्मिन् समायात ।

प्रथमो राजा । महाराज ! सत्यमेव भवता गुरुदेव परम-सदय ऊर्जस्वी च । महामोहनश्च तस्य रूपम् ।

महाराज । अहो अनिर्वचनीयगुण-धाम मम गुरु ।

महानसौ विज्ञतमो गुरुर्मे
धन्योऽस्मि शिष्यत्वमवाप्य तस्य ।
तदीय-पाण्डित्य-विनिर्जितस्तु
दासत्वमङ्गीकृतवान् पुराऽहम् ॥ २०९

प्रथमो राजा । तद्विषयक किञ्चित् श्रोतुमिच्छामि ।

महाराज । राजन् , श्रूयतां कृपया । एकदाऽह अस्य पादयुगल सेवमान परमकौतूहलेनापृच्छम्—“देव ! सत्य किम् ? कृपया व्याख्याहि ।”

द्वितीयो राजा । “पादयुगल सेवमान ” इति किम् ?

महाराज । बन्धो ! तत्रैव गुरुदेवस्य महामाहात्म्यम् । मम गुरुदेवो मम राजसम्मानविषये सर्वदा सचेतनो वर्तते ।

मा भूत् सम्मानहानिर्मम मनुजपतेरित्यभिप्रेत्य देवः
पादस्पर्शं सदीयं बहुजनसविधे नानुजानाति मह्यम्।
एकस्तस्मान्निशीथे परिजनरहितो यावदिच्छं पदाब्जं
तस्याहं सेवमानः सविनयमतुलं शश्वदाप्नोमि सौख्यम् ॥ २१०

प्रथमो राजा। अहो व्यवहाराभिज्ञता महात्मनो भवद्गुरुदेवस्य।

द्वितीयो राजा। किन्तु सत्यविषये किमुक्तं गुरुदेवेन?

महाराजः। तेन उक्तमासीत्—"महाराज! पूर्णसत्यम् एकमेवाद्वितीयम्। साधारण्येन यत् सत्यरूपेण परिगृह्यते तदापेक्षिकं सत्यम्। ज्ञानवृद्धि-हेतोर्मानवः सत्यात् सत्यान्तरमनुयाति। भवतु नाम—यदुक्तं तदसत्यमिति न यच्च परिगृहीतं तदुन्नततरमास्तां वा। तथापि परममत्यस्योपलब्धिरनेन प्रकारेणासम्भव एव। सति परम-सत्यज्ञाने आपेक्षिक-सत्यज्ञानं लोपं याति।"

द्वितीयो राजा। अहमेतदुपदेशं श्रुत्वा अधुनैव तस्य पादयुगलं चिराय आश्रयितुमिच्छामि।

प्रथमो राजा। सत्यमेव महाराजो भाग्यवान्।

महाराजः। अहो मन्ये न कोऽपि मादृशो भाग्यवान्।

आसाद्यते कोटि-तपःफलेन
दैवेन तुल्यो गुरुरत्र लोके।
विश्वार्चितो यस्य गुरुर्महात्मा
श्रीरामकृष्णः परमो हि हंसः ॥ २११
वरिष्ठ-शिष्यः किल तस्य मे गुरु-
रयं महात्मा प्रतिपन्न-पौरुषः।
स्वदेशकृष्टिं विवरीतुमुत्सुकः
प्रतीच्यदेशं प्रति गन्तुमिच्छति ॥ २१२

*राजगण! अशेष-गुणभूषितस्य मम गुरोर्विदेशगमनं भारतवर्षेतिहासस्य* श्रेष्ठाध्यायरूपेण राजिष्यत इति न मे कश्चन सन्देहः।

प्रथमो राजा। विलायते कुत्र किमुद्दिश्य गमिष्यति गुरुदेवः?

महाराजः। आमेरिका-महादेशे चिकागोनगरे प्राच्य-प्रतीच्य-धर्म-सभायां हिन्दुप्रतिनिधिरूपेण गमिष्यति मम गुरुदेवः। पश्यन्तु भवन्तः, तदर्थं सर्वा व्यवस्थापना कृतासीन् मद्देशवासिभिः। किन्तु,

महाराज । नाय विषयो मया चिन्तितपूर्व आसीत्। ( सदीर्घश्वासम् ) भवतु तद् वयमेव श्रोष्याम । भद्रे ! कुरु सङ्गीतम् । श्रीगुरुमहाराजस्य आगमनमभीप्सितमासीत् किन्तु न तत् सम्भवपरमास्ते ।

नर्तकी । ( स्वगतम् ) अहो नितरां मन्दभाग्यास्मि, यत् सङ्गीत-मेकमपि परम-महिममण्डित वरणीयतम-सज्जन श्रीगुरुदेव श्रावयितु न समर्थास्मि । यदीत्थ भवेद् भगवद्विवचन, कथ महात्मानो निर्दिशन्ति—विश्व जनेषु न भेदविचार करणीय इति । ( चक्षुर्निमील्य ) भगवन् ! दूरे तिष्ठन्नपि राजगुरुर्मे सङ्गीत शृणोतु । भवतु, गायामि—

प्रभो न गणय दोषराशि मम
तारयावला मा समदर्शितया सर्वदोषहर ।
दोषे च गुणे भव सम ।
इय मम समदर्शि-नामधर ।
प्रक्षात्मिकामिमा समुद्धर ॥ २१५
राजतेऽय खण्ड इयमूर्तौ देवमन्दिरे
राजतेऽय खण्डश्छुरिका घातककरे
स्पर्शमणि-स्पर्शनेनोभे समं स्वर्णरूपधरे ॥ २१०
दोषे च गुण भव सम
न गणय दोषराशि मम ॥ २१७
यमुनाहृदयशोभि पुण्यमधुर-जल
दूषितस्रोतवाहि यदिद समस्त
गङ्गा-स्रोतसि जात पवित्र सकल
हर हर दोषान् मम सर्वदोषहर ॥ २१८
न भव देव मम दोषगणन-तत्परो
भव सत्य त्व समदर्शि-नामधर ॥ २१९

महाराज । ( स्वगतम् ) अहो अवमानितेय नर्तकी करुण करोति सङ्गीतम् । यद्यपि जागतिक-गणनया यत् सत्य, परमार्थ निर्णय-व्यापारे तद् भवेद्वा भिन्नरूपम् । सर्वथान गुरुदेवा मम प्रमाणम् ।

सर्वे । महाराज ! सुष्ठु गीत सङ्गीत भवदार्मात्रतयाऽनया । सुकण्ठीय ललना बहुगुणविभूषणा च ।

तस्याशिषा तनय एष यदस्ति जात
पादार्पण तदिह तस्य नितान्त-काम्यम् ।
मत्प्रेषितादिति निशम्य जनाद् गुरुर्मे
मद्वारिहोपगतवान् कृपया परीत ॥ २१३

**द्वितीयो राजा।** तस्य आशीर्वादक्रमेण पुत्रो जात इति किम् ?

**महाराज।** अहो राजन्, यदा भागवत जीवनमासील्मे प्रारब्ध, तदाऽपि जागत-जीवन प्रति ममासक्तिरासीन्महती।

**प्रथमो राजा।** अहो विचित्रा मनोवृत्ति । ततस्तत ?

**महाराज।** राजन्! को वा अत्र विस्मयस्यावकाश ? प्रवृत्तिभेदो मानवानां स्वाभाविक । पश्यतु भवान्,

पूर्वं प्रसाद्य तपसा जगदम्बिका ता
प्राप्तौ समाधि-सुरथौ स्वमतौ वरौ द्वौ।
ज्ञान तयो समवृणोत् प्रथमो विरक्तो
राज्य परो हृतमयाचत भोगकाम ॥ २१४

**द्वितीयो राजा।** तेन महाराज किं वक्तुमिच्छति ?

**महाराज।** एतद् ब्रवीमि, यद् अधिकारिभेदेन कामनाभेदश्चिरन्तन इति। ततश्च यदा जागती समासक्तिर्मा सन्तानलाभाय प्रोद्वेजयामास, तदाह श्रीश्रीगुरुदेव-स्वामिमहोदय पुत्रसन्तान लाभाय प्रार्थितवान्। गुरुदेवश्च तथा भविष्यतीति कृपयाऽवोचत्। श्रीश्रीगुरोराशीर्बलेन सन्तानश्च मया लब्ध । किन्तु नाह जाने काञ्चन परित्यज्य काचो मया प्रार्थितो नवेति। अथच तस्यैव कृपया सर्व सघटितम् । अनन्त विभूतिमयोऽसौ मे गुरुश्च मया प्रार्थितो यदस्या नर्तकीश्रेष्ठाया सङ्गीत तेन श्रोतव्यमिति। आशासेऽचिरादेव देवो गुरुर्मे समायास्यतीति।

( तत प्रविशति राजान्त पुरचारी कश्चन )

**महाराज।** (उत्थाय) अपि गुरुदेव समायात ? सर्वे वय गच्छाम-स्तस्य प्रत्युद्गमनाय ( सर्वे समुत्थिता )।

**राजान्तपुरचारी।** महाराज! गुरुदेव कथयति—मद्वचनेन महाराज ब्रूहि, सन्न्यासिजनो न नर्तकी-सङ्गीतसमाजे समुपस्थित स्यादिति।

महाराज । नाय विषयो मया चिन्तितपूर्व आसीत् । ( सदीर्घश्वासम् ) भवतु तद् वयमेव श्रोष्याम । भद्रे ! कुरु सङ्गीतम् । श्रीगुरुमहाराजस्य आगमनमभीप्सितमासीत् किन्तु न तत् सम्भवपरमास्ते ।

नर्तकी । ( स्वगतम् ) अहो नितरां मन्दभाग्यास्मि, यत् सङ्गीतमेकमपि परम-महिममण्डित वरणीयतम-सज्जन श्रीगुरुदेव श्रावयितु न समर्थास्मि । यदीत्थ भवेद् भगवद्विवचन, कथ महात्मानो निर्दिशन्ति—विश्व जनेषु न भेदविचार करणीय इति । ( चक्षुर्निमील्य ) भगवन् ! दूरे तिष्ठन्नपि राजगुरुर्मे सङ्गीत शृणोतु । भवतु, गायामि—

प्रभो न गणय दोषराशि मम
तारयावला मा समदर्शितया सर्वदोषहर ।
दोषे च गुणे भव सम ।
देव मम समदर्शि-नामधर ।
ब्रह्मात्मिकामिमा समुद्धर ॥ २१५
राजतेऽय खण्ड इयमूर्तौ देवमन्दिरे
राजतेऽय खण्डच्छुरिका घातककरे
स्पर्शमणि-स्पर्शनेनोभे समे स्वर्णरूपधरे ॥ २१६
दोषे च गुणे भव सम
न गणय दोषराशि मम ॥ २१७
यमुनाहृदयशोभि पुण्यमधुर-जल
दूषितस्रोतयाहि यदिद समल
गङ्गा-स्रोतसि जात पवित्र सकल
हर हर दोषान् मम सर्वदोषहर ॥ २१८
न भव देव मम दोषगणन-तत्परो
भव सत्य त्व समदर्शि-नामधर ॥ २१९

महाराज । ( स्वगतम् ) अहो अवमानितेय नवकी करुण करोति सङ्गीतम् । अहोवत ! जागतिक-गणनया यत् सत्य, परमार्थ निर्णय-व्यापारे तद् भवेद्वा भिन्नरूपम् । सर्वथात्र गुरुदेवो मम प्रमाणम् ।

सर्वे । महाराज ! सुष्ठु गीत सङ्गीत भवदामन्त्रितयाऽनया । सुकण्ठीय ललना बहुगुणविभूषणा च ।

**नर्तकी ।** (क्रन्दन्ती) किन्तु वे नाम गुणा मम, यान् स्वयं ब्रह्मसदृश सन्न्यासिगुरुर्महाराजस्य नाद्रियते।

(ततः प्रविशति स्वामिमहाराजः । सर्वे स्वासनेभ्य उत्थितास्तं नमस्कुर्वन्ति।)

**स्वामिमहाराज ।** अहो चित्तद्राविणी हे ब्रह्ममयि । तव गीतिः । अनया सस्पृष्टं मम हृदयम्। यथोक्तं सङ्गीतेऽस्मिन्, तथा ममापि मतिः । ब्रह्मात्मकं जगत् सर्वम्। ब्रह्मैदं स्थावर जङ्गमात्मकं सर्वम्, ब्रह्मेयं नर्तकी, ब्रह्मायं महाराजः। सर्वं खल्विदं ब्रह्म। प्रसारिता मम दिव्यदृष्टिस्तव सङ्गीत-महिम्ना। सत्यं धन्यासि त्वम्।

**प्रथमो राजा ।** भवत आगमनेन धन्या वयं सञ्जाताः ।

**स्वामि-महाराज ।** परम-कल्याण भवतामायासे।

**नर्तकी ।** (दूरात्) देवदेव ! सकृप प्रणामाञ्जलिं मम गृहाण ! महिमाऽय सङ्गीतस्य । तव प्रसादात् लब्धा मयाद्य शाश्वतदृष्टिः । सङ्गीतस्य मर्म ब्रह्म, तदेव मम चिरोपास्यं भवतु।

**समुपस्थिता सर्वे ।** गुरुदेव ! महती तवेयं शिक्षाऽस्माकं सर्वेषां हृदयानि सुतरां स्पृशति।

**महाराज ।** भगवन् गुरुदेव ! समीपागता भवतः पाश्चात्त्यदेश-गमन-समयः । भारत-जननी अस्माकं चिरमासीज् जगतः शिक्षादानकर्त्री। भवता पुत्रवती सा पुनरपि स्वीयपदवीं प्राप्स्यति । पुनश्चिन्तयामः—यस्यां राजते भवादृशः पुनः कथं साद्य निद्रान्विता स्यात्?

**थमो राजा ।** सर्वे वयं प्रार्थयामहे गुरुदेव सकाशे, स्वमहिम्ना विश्वमिदं प्रोद्भासयतु गुरुदेवः । शिष्या वयं धर्मदेश-भारत-निवासिनो धन्यधन्या भविष्याम इति।

**स्वामि-महाराज ।** तत्र महिमा गुरुदेवस्य मम श्रीश्रीरामकृष्ण-परमहंस-देवस्य। तस्य महिमानं वयं प्रोद्घोषयामः।

(श्रीश्रीरामकृष्ण-स्तुतिः)

कोटि कोटि विश्ववासि-तपःपुण्यफलम्।
सर्वयुग-तपश्चय-प्रेमघन समन्वय
गरुर्नो जगदेक-सबलम्॥ २२०

धरणी सकल-धर्म-मर्मज्ञान-कृतकर्म
प्रभाव-बोधित-सकल-मण्डलम् ।
जननीसाधन धारा-प्रसाद परपरा–
प्लावितास्विल जलस्थलम् । २२१
कोटिशो वन्दे श्रीगुरुचारुपदकमल
कोटिकोटिविश्ववासि तप पुण्यफलम् ॥ २२२

नर्तकी । (स्वगतम्) अहो महापुण्यफल मम—
दिनेश-कोटिप्रभयेव भासुर
तपश्चयोपार्जित दिव्य वैभवम् ।
इम समालोक्य सुसौम्य-दर्शन
मनो ममोत्फुल्लतम प्रजायत ॥ २२३

अपिच —

तप पुञ्ज समुद्भूत दिव्यालोक विमण्डितम् ।
पुण्यकायमिम दृष्ट्वा श्रद्धे योपैति म मन ॥ २२४

(स्वामि-महाराजमुद्दिश्य) देव । श्रुत किल मया—पुराकाले श्रेष्ठतपस्विदर्शन प्रभावेण धन्या जाता काश्चन ललना यथा नामाचार्यहरिदास प्रसादनेन लक्षहीरा, या पश्चात् परमवैष्णवी सञ्जाता । एवमन्या अपि । "यमेवैष वृणुते तेन लभ्य" इति च श्रुतम् । तत् स्वय भगवान् नरविग्रहधर पवित्रपावन–नाममहिमविस्ताराय मामुद्धर्तुकामा मत्समीपमागत इति सम्भावयामि । भगवन्त गुरुदेव कोटिशो वन्दे ।

स्वामि-महाराज ।
भूयोऽपि वच्मि यदह महतो गुरोर्मे
छायैव तन्मम तत पृथगस्तिता का ?
पुण्यप्रकर्षमथ वाञ्छितसिद्धिमिच्छन्
इष्टार्थद परगुरु स्मर रामकृष्णम् । २२५

सर्वे । भगवत श्रीरामकृष्णस्य जय ।

स्वामि-महाराज । महाराज । सव सुष्ठु सघटितम् । मनो मे कथयति, इत पर मया विलायतगमने विलम्बो न करणीय । तदचिरादेव विदेश गमानुमति भवता सर्वेषां समीपे प्रार्थये ।

महाराज.। गुरुदेव !

देवोऽभवन्मम यदा नयनाध्वनीनो
मग्नस्तत. प्रभृति दिव्यरसार्णवेऽहम् ।
मन्ये जगन्मधुमयं महिमोज्ज्वलं तद्
याचे भवानिह करोतु चिराय वासम् ॥ २२६

जगत् प्रतीयते परमानन्दमय महिममय मधुरिममय मधुमय मधुनोऽपि मध्विति। तत् प्रार्थये भवतामस्माकमन्तिकावस्थितिम्।

स्वामि-महाराज.। किन्तु गुरुदेवसकाशे प्रतिश्रुतवानस्मि निखिले विश्वे तस्य धर्मदर्शनमतमवश्यमेव प्रचारित स्यादिति।

महाराज.। देव ! पुनरपि कृपया शृणु। स्वार्थपरवशोऽस्मीति भवाश्चिन्तयिष्यति तथापि किं करोम्यहम् ? यदा प्रभृति भवत्कृपाभाजन जातोऽस्मि, तत एव सौरकरस्पर्शेन कमल-दलानीव, सहस्रदलानि मम जीवन कमलस्य विकसितानि। गोमुखीमुखादारभ्य यथा भगीरथखातावच्छिन्ना भागीरथीधारा भारतवर्षस्योत्तर दक्षिणे दिशौ सयोज्य निरन्तर प्रवाहेण प्रवहति, तद्वत् भवदुपदेश वाणीखातावच्छिन्नास्मद्जीवनधाराऽपि यशःपरपराद्योपान्तधारा मधिकृत्य, उर्वरीकृत्य च पुण्य-परिवार जीवनभूमिं सहस्रधा नितरां खरवेगेण प्रवहति। भारतमहासागरस्योर्मिमाला देशस्य सुखद खानि सगृह्य दूरे बहुदूरे दूरतम-सुदूरे प्रसरति—तथापि निरन्तर-देशमातृका पदचुम्बन सार्थक्येन स्वक-जीवन सरक्षतीव ध्रुवम्। तद्वदस्माक भवद्भक्तानां जीवनोर्मिमाला सम्प्रसरन्तु नाम दिग्दिगन्त, किन्तु भवच्छ्रीचरणान्तिकतम स्पर्श विना कथ वय जीवित धारयिष्याम ?

[ महाराजो रोदिति, राजगणोऽश्रुभारप्रपूरितनयन किञ्चिद् वक्तुकाम इव तिष्ठति, नर्तकी उच्चै रोरूयते ]

स्वामि-महाराज। राजगण ! परम स्नेहास्पद महाराज ! मातरश्च ! शृण्वन्तु सर्वे।

भूपा गुरो शतसहस्रगुणैर्गरिष्ठा
सा सारदामणि-महाजननीति मन्ये।

जाने न कोमलतरं मधुरं ममत्व-
पूर्णं तदीयहृदयात् किमपीति वित्त ॥ २२७

एवंविधा मम जननी "पूज्यतम-गुरुदेवस्यादेशो मयाऽवश्यमेव पालनीयः, यावत्तत्सत्यं मया न परिपालयिष्यते तावन्नाहं स्वस्थानं प्रत्यावर्तिष्ये" इति मयोक्ते करुण-करुणमवलोकयन्ती मम शिरसि हस्तं निधाय मधुरम् आशिषो दत्तवती, न सा मदाशासिद्धिविषये कञ्चनान्तरायं कृतवती । किञ्च, सन्देहपरं मनो मे सदा तस्याः कोमलतम-धन्यपादारविन्दं स्पृष्ट्वा स्पृष्ट्वेव प्रसरतीति हेतोः विदेश-गमनानुमतिं संप्रार्थ्य प्रेषिते च मया पत्रे सा पुनरपि मह्यं विदेश-गमनानुमतिं दत्तवती । ततः सोत्साहोऽहं गन्तास्मि बहुसमुद्राणां परपारे आमेरिका-महादेशे । युष्माभिरपि तथानुमतिर्देया ।

नरेश तव मानसं मधुर-कोमलं वेद्म्यहं
तथापि तव सन्निधौ मम मनोरथं वेदये ।
उपस्थितविधेर्विदन्ननतिलङ्घ्यतां सर्वथा
विधूय विरहव्यथां भजतु सौमनस्यं भवान् ॥ २२८

जननी जगदीश्वरी विश्वपालयित्री सर्वेषां मङ्गलमवश्यमेव विधास्यति ।

महाराजः । (अश्रु प्रमार्ज्य) देव ! यदि जगदम्बिका स्वयं दत्तवत्यनुमतिं, कथं वयं बाधा भवामः ? केवलम् एतदेवास्माकं सर्वेषां संप्रार्थनम्—

समाशास्या देवैरपि भवतु ते सिद्धिरतुला
निकामं माहात्म्यं प्रसरतु भवे भारतभुवः ।
विरोधो भ्रातॄणां प्रशमनमुपेयात् प्रतिदिशम्
अविच्छिन्ना शान्तिः पदमुपनिधेयादिह दृढम् ॥ २२९

गुरुदेव ! शोकविद्धस्य मम अशान्तिके चित्ते कुरुताम् आशंसनम् ।

स्वामि-महाराजः । यथेच्छं ब्रूहि महाराज ! न तुभ्यं किञ्चिदपि ममादेयमास्ते ।

महाराजः । तदहं जाने, ततो ब्रवीमि—

यानङ्गीकृतवान् पुरा "विविदिषानन्दा"दि-नामोच्चयान्
आर्यस्तानधुना जहातु सकलान् नामेप्सितात्ते हि मे ।

अद्यारभ्य विराजतामिह "विवेकानन्द"नाम्ना भवान्
इत्येषा भवदङ्घ्रि-पङ्कज-युगे मूर्ध्ना मम प्रार्थना ॥ २३०

स्वामि-महाराजः। एतदेव ? अहो अत्यल्पमेतदभीप्सितम् ! निश्चितं तद्भविष्यति।

महाराजः। ततो विवेकानन्दरूपेण देव ! भवान् भारतजनन्याः शाश्वत-धर्माधर्म-विवेकं प्रचारयतु।

यत् सत्यमेतन्निखिले धरातले
धर्मारुणः प्रागुदियाय भारते।
युष्मन्महिम्ना पुनरद्य भारतात्
तद्भानवः संप्रसरन्तु सर्वतः ॥ २३१

विजयी चिराय भवतु परमगुरुः श्रीपरमहंसदेवः, जगद्विजयिन्यास्ता जगद्धात्री महामाता श्रीश्रीसारदामणिश्च।

स्वामि-महाराजः। महाराज ! अतः परं कमपि उपकारं महाराजस्य भवतां सर्वेषां चोपस्थितानां कर्तुं पारयामि ?

राजगणः। भवतामाशीर्वाद एव श्रेष्ठ-संबलं स्वामि-महाराज !

स्वामि-महाराजः। प्रार्थये तथापीदमस्तु—

अगौरवं दूरमुपैतु भारताद्
उदेतु मातुर्वदने स्मितद्युतिः।
कराश्च मातुर्वितरन्तु मङ्गलं
विभातु वेदध्वनिपूरितं जगत् ॥ २३२




॥ समाप्तं द्वादश-दृश्यम् ॥

—०—

॥*॥ समाप्तश्चायं ग्रन्थः ॥*॥